## अध्याय ३४

चापशिखिरजततैलक्षीरजलाभः स्वकालसम्भूतः।
अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः॥ ४॥
सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः।
असकलशकटशरासनशृंगाटकवत् स्थितः पापः॥ ५॥
शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो भयं धूम्रे।
हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि॥ ६॥

\+　　+　　+

प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः।
परिविष्टयोरभीक्ष्णं लग्नास्तनभःस्थयोस्तद्वत्॥ ९॥
सेनापतेर्भयकरो द्विमण्डलो नातिशस्त्रकोपकरः।
त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम्॥ १०॥
वृष्टिस्त्र्यहेण मासेन विग्रहो वा ग्रहेन्दुभनिरोधे।
होराजन्माधिपयोर्जन्मर्क्षे वाशुभो राज्ञः॥ ११॥
परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः।
जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च॥ १२॥
भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम्।
जीवे परिवेषगते पुरोहितामात्यनृपपीडा॥ १३॥
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च।
शुक्रे यायिक्षत्रियराज्ञां पीडाप्रियं चान्नम्॥ १४॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ।
परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च॥ १५॥

\+　　+　　+

याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः।
प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलस्थेषु॥ १७॥

## अध्याय ३६

उदगादिपुरोहितनृपबलपतियुवराजदोषदं खपुरम्।
सितरक्तपीतकृष्णं विप्रादीनामभावाय॥ १॥
नागरनृपतिजयावहमुदग्विदिक्स्थं विवर्णनाशाय।
शान्ताशायां दृष्टं सतोरणं नृपतिविजयाय॥ २॥
सर्वदिगुत्थं सततोत्थितं च भयदं नरेन्द्रराष्ट्राणाम्।
चौराटविकान् हन्याद् धूमानलशक्रचापाभम्॥ ३॥
गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्।
दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये॥ ४॥
अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा॥ ५॥

## अध्याय ४६

यानत्रेरुत्पातान् गर्गः प्रोवाच तानहं वक्ष्ये। तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः॥ १॥
अपचारेण नराणामुपसर्गः पापसञ्चयाद्भवति। संसूचयन्ति दिव्यान्तरिक्षभौमास्तदुत्पाताः॥ २॥
मनुजानामपचारादपरक्ता देवताः सृजन्त्येतान्। तत्प्रतिघाताय नृपः शान्तिं राष्ट्रे प्रयुञ्जीत॥ ३॥

दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घातपवनपरिवेषाः । गन्धर्वपुरपुरन्दरचापादि यदान्तरिक्षं तत् ॥ ४ ॥
भौमं चरस्थिरभवं तच्छान्तिभिराहतं शममुपैति । नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके ॥ ५ ॥
दिव्यमपि शममुपैति प्रभूतकनकान्नगोमहीदानैः । रुद्रायतने भूमौ गोदोहात् कोटिहोमाच्च ॥ ६ ॥
आत्मसुतकोशवाहनपुरोहितेषु लोकेषु । पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः ॥ ७ ॥
अनिमित्तभङ्गचलनस्वेदाश्रुनिपातजल्पनाद्यानि । लिङ्गार्चायतनानां नाशाय नरेशदेशानाम् ॥ ८ ॥
दैवतयात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि । सम्पर्यासनसादनसङ्गाश्च न देशनृपशुभदाः ॥ ९ ॥
ऋषिधर्मपितृब्रह्मप्रोक्तं वैकृतं द्विजातीनाम् । पद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥ १० ॥

गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजं च लोकानाम् ।
स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम् ॥ ११ ॥

वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे । धातरि सविश्वकर्मणि लोकाभावाय निर्दिष्टम् ॥ १२ ॥
देवकुमारकुमारिवनिताप्रेष्येषु वैकृतं यत्स्यात् । तन्नरपतेः कुमारककुमारिकास्त्रीपरिजनानाम् ॥ १३ ॥
रक्षःपिशाचगुह्यकनागानामेतदेव निर्देश्यम् । मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः ॥ १४ ॥
बुद्धा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः । स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत् प्रतिमाम् ॥ १५ ॥
मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत् । स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः ॥ १६ ॥

इति विबुधविकारे शान्तयः सप्तरात्रं द्विजविबुधगणार्चा गीतनृत्योत्सवाश्च ।
विधिवदवनिपालैर्याः प्रयुक्ता न तेषां भवति दुरितपाको दक्षिणाभिश्च रुद्धः ॥ १७ ॥

राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान् । मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया ॥ १८ ॥
जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः । सैन्यग्रामपुरेषु च नाशो वह्नेर्भयं कुरुते ॥ १९ ॥
प्रासादभवनतोरणकेत्वादिष्वनलेन दग्धेषु । तडिता वा षण्मासात् परचक्रस्यागमो नियमात् ॥ २० ॥

धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निजं महाभयदम् ।
व्यभ्रे निश्युडुनाशो दर्शनमपि चाह्नि दोषकरम् ॥ २१ ॥

नगरचतुष्पादाण्डजमनुजानां भयङ्करं ज्वलनमाहुः । धूमाग्निविस्फुलिङ्गैः शय्याम्बरकेशगैर्मृत्युः ॥ २२ ॥

आयुधज्वलनसर्पणस्वनाः कोशनिर्गमनवेपनानि वा ।
वैकृतानि यदि वाऽऽयुधेऽपराण्याशु रौद्ररणसंकुलं वदेत् ॥ २३ ॥
मन्त्रैर्वाह्नैः क्षीरवृक्षात्समिद्भिर्होतव्योऽग्निः सर्षपैः सर्पिषा च ।
अग्न्यादीनां वैकृते शान्तिरेवं देयं चास्मिन् काञ्चनं ब्राह्मणेभ्यः ॥ २४ ॥

शाखाभङ्गेऽकस्माद्वृक्षाणां निर्दिशेद्रणोद्योगम् । हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥ २५ ॥
राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते बाले । वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति ॥ २६ ॥
मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः । स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ॥ २७ ॥
शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानाम् । पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ २८ ॥
पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्दिष्टम् । धूमस्तस्मिन् ज्वालाऽथवा भवेन्नृपवधायैव ॥ २९ ॥
सर्पत्सु तरुषु जल्पत्सु वाऽपि जनसंक्षयो विनिर्दिष्टः । वृक्षाणां विकृत्ये दशभिर्मासैः फलविपाकः ॥ ३० ॥

स्रग्गन्धधूपाम्बरपूजितस्य च्छत्रं निधायोपरि पादपस्य ।
कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडङ्गहोमः ॥ ३१ ॥
पायसेन मधुना च भोजयेद् ब्राह्मणान् घृतयुतेन भूपतिः ।
मेदिनी निगदितात्र दक्षिणा वैकृते तरुकृते महर्षिभिः ॥ ३२ ॥

\+ \+ \+

दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम् । रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम् ॥ ३८ ॥
शीतोष्णविपर्यासे नो सम्यगृतुषु च सम्प्रवृत्तेषु । षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च ॥ ३९ ॥
अन्यतौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम् । रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः ॥ ४० ॥
धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात् । अङ्गारपांसुवर्षे विनाशमायाति तन्नगरम् ॥ ४१ ॥
उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः । छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसञ्जननम् ॥ ४२ ॥

क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णवारिणां वर्षे। देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम् ॥ ४३ ॥
यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम् ॥ ४४ ॥
व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथवा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत् ॥ ४५ ॥

सूर्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले।
धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम् ॥ ४६ ॥

अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते। शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम् ॥ ४७ ॥
स्नेहासृङ्मांसवहाः संकुलकलुषाः प्रतीपगाश्चापि। परचक्रस्यागमनं नद्यः कथयन्ति षण्मासात् ॥ ४८ ॥
ज्वालाधूमक्वाथा रुदितोत्क्रुष्टानि चैव कूपानाम्। तत्प्रजल्पितानि च जनमरकाय प्रदिष्टानि ॥ ४९ ॥
तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम्। सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम् ॥ ५० ॥
सलिलविकारे कुर्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः। तैरेव च जपहोमं शममेव पापमुपयाति ॥ ५१ ॥
प्रसवविकारे स्त्रीणां द्वित्रिचतुष्प्रभृतिसम्प्रसूतौ वा। हीनातिरिक्तकाले च दशकुलसंक्षयो भवति ॥ ५२ ॥
वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम्। षण्मासात्सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ ॥ ५३ ॥
नार्यः परस्य विषये त्यक्तव्यास्ता हितार्थिना। तर्पयेच्च द्विजान् कामः शान्तिं चैवात्र कारयेत् ॥ ५४ ॥
चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु। नगरं स्वामिनं यूथमन्यथा हि विनाशयेत् ॥ ५५ ॥

परयोनावभिगमनं भवति तिरश्चमसाधु धेनूनाम्।
उक्षाणौ वान्योऽन्यं पिबति श्वा वा सुरभिपुत्रम् ॥ ५६ ॥

मासत्रयेण विद्यात् तस्मिन्निःसंशयं परागमनम्। तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ ॥ ५७ ॥
त्यागो विवासनं दानं तत्तस्याशु शुभं भवेत्। तर्पयेद्ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥ ५८ ॥
स्थालीपाकेन धातारं पशुना च पुरोहितः। प्राजापत्येन मन्त्रेण यजेद्बह्वन्नदक्षिणाम् ॥ ५९ ॥
यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतम्। राष्ट्रभयं भवति तदा चक्राणां सादभङ्गं च ॥ ६० ॥

अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात्।
व्युत्पत्तौ वा तेषां परागमो नृपतिमरणं वा ॥ ६१ ॥

गीतरवतूर्यनादा नभसि यदा व चरस्थिरान्यत्वम्। मृत्युस्तदा गदा वा विस्वरतूर्ये पराभिभवः ॥ ६२ ॥
गोलांगूलयोः सङ्गे दर्वीशूर्पाद्युपस्करविकारे। क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् ॥ ६३ ॥
वायव्येष्वेषु नृपतिर्वायुं सक्तुभिरर्चयेत्। आ वायोरिति पञ्चर्चौ जाप्याश्च प्रयतैर्द्विजैः ॥ ६४ ॥
ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत्। बह्वन्नदक्षिणा होमाः कर्तव्याश्च प्रयत्नतः ॥ ६५ ॥

पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम्।
नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि ॥ ६६ ॥

सन्ध्याद्वयेऽपि मण्डलमावध्नन्तो मृगा विहङ्गा वा। दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः ॥ ६७ ॥
श्वानः प्ररुदन्त इव द्वारे वसन्ति जम्बुका दीप्ताः। प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा ॥ ६८ ॥
कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः। प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः ॥ ६९ ॥
गृहचैत्यतोरणेषु द्वारेषु च पक्षिसंघसम्पाताः। मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय ॥ ७० ॥
श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय। पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् ॥ ७१ ॥
मृगपक्षिविकारेषु कुर्याद्धोमान् सदक्षिणान्। देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः ॥ ७२ ॥
सुदेवा इति चैकेन देया गावश्च दक्षिणा। जपेच्छाकुनसूक्तं वा मनोवेदशिरांसि च ॥ ७३ ॥

* *
*

# भद्रबाहुसंहिता



॥ ॐ नमः सर्वज्ञाय[1] ॥

मगधेषु[2] पुरं[3] ख्यातं नाम्ना राजगृहं शुभम्[4] । नानाजनपदाकीर्णं[5] नानागुणविभूषितम् ॥ १

तत्राऽस्ति सेनजिद्राजा युक्तो राजगुणैः शुभैः । तस्मिन् शैलो[6] भुवि ख्यातो नाम्ना पाण्डुगिरिः शुभः[7] ॥ २

नानावृक्ष[8]समाकीर्णो नानाविहगसेवितः । चतुष्पदैः[9] सरोभिश्च साधुभिश्चोपसेवितः[10] ॥ ३

तत्राऽऽसीनं महात्मानं[11] ज्ञान-विज्ञानसागरम् । तपोयुक्तं[12] च[13] श्रेयांसं[14] भद्रबाहुं निरामयम्[15] ॥ ४

द्वादशाङ्गस्य वेत्तारं निर्ग्रन्थं[16] च[17] महाद्युतिम् । वृतं[18] शिष्यैः[19] प्रशिष्यैश्च[20] निपुणं तत्त्ववेदिनम्[21] ॥ ५

प्रणम्य[22] शिरसा[23]ऽऽचार्यमूचुः[24] शिष्या वचस्पतिम्[25] । सर्वेषु[26] प्रीतिमनसो[27] दिव्यं[28] ज्ञानं बुभुत्सवः[29] ॥ ६

पार्थिवानां हितार्थाय भिक्षूणां हितकाम्यया । श्रावकाणां हितार्थाय दिव्यं ज्ञानं ब्रवीहि नः ॥ ७

शुभा-ऽशुभं समुद्भूतं श्रुत्वा राजा निमित्ततः । विजिगीषुः स्थिरमतिः[30] सुखं पाति महीं[31] सदा ॥ ८

राजभिः पूजिताः सर्वे भिक्षवो धर्मचारिणः । विहरन्ति निरुद्विग्नास्तेन राजाभियोजिताः[32] ॥ ९

पापमुत्पातिकं दृष्ट्वा ययुर्देशांश्च[33] भिक्षवः । स्फीतान्[34] जनपदांश्चैव संश्रयेयुरनोदिताः[35] ॥ १०

श्रावकाः स्थिरसंकल्पा दिव्यज्ञानेन हेतुना । नाश्रयेयुः[36] परं तीर्थं यथा[37] सर्वज्ञभाषितम् ॥ ११

सर्वेषामेव जन्तूनां[38] दिव्यं ज्ञानं[39] सुखावहम् । भिक्षुकाणां विशेषेण परपिण्डोपजीविनाम् ॥ १२

विस्तीर्णं द्वादशाङ्गं तु भिक्षवश्चाल्प[40]मेधसः । भवितारो हि बहवस्तेषां चैवेदमुच्यताम् ॥ १३

सुखग्राह्यं[41] लघुग्रन्थं स्पष्टं[42] शिष्यहितावहम् । सर्वज्ञभाषितं तथ्यं निमित्तं तु ब्रवीहि नः ॥ १४

**उल्कां[43] समासतो(१) व्यासात्(२) परिवेषांस्तथैव च(३) ।**
**विद्युतो(४)ऽभ्राणि(५) सन्ध्याश्च(६) मेघान्(७) वातान्(८) प्रवर्षणम्(९) ॥ १५**

**गन्धर्वनगरं[44](१०) गर्भान्(११) यात्रो(१२)त्पातं[45](१३) तथैव च[46] ।**
**ग्रहचारं(१४) पृथक्त्वेन[47] ग्रहयुद्धं च कृत्स्नतः[48] ॥ १६**

वातिकं चाथ स्वप्नांश्च[49] मुहूर्तांश्च तिथींस्तथा । करणानि निमित्तं[50] च शकुनं पाकमेव च[51] ॥ १७

---

1 B सिद्धेभ्यः; D श्रीजिनाय नमः । 2 B C मागधेषु । 3 B पुर । 4 A C D पुरं । 5 A D °समाकीर्णं । 6 A D शैलेषु; B सैलेसु । 7 B शुभे । 8 A D °वृक्षैः । 9 A B चतुःपदैः । 10 C °शोभितः । 11 B महात्माणं; C महाज्ञानं । 12-13-14 C तपोयुक्तक्रियाशक्त्या । 15 B C निराश्रयम् । 16 B D निग्रंथं; C निग्रेन्थ । 17 A सु°; B C स° । 18 A वृत; B वृत्तिं; C वृत्तं । 19 B शष्यै । 20 B प्रसिष्यैः C भूयिष्ठैः । 21 A °वादिनम् । 22 A C D नमस्य । 23 B सिरसा । 24 A-न; C वेन । 25 A °पति; B तदा गिरां । 26 A सविषु; B सर्वेऽपि; C सर्व्वेषु । 27 D प्रीत° । 28 A B दिव्य° । 29 A बुभुत्सुव । 30 B °मति । 31 A मही । 32 A °भिजूतितः; B राज्ञाभिपूरिताः । 33 A जयुह्वाश्वभि°; B ययुद्वेषस्वभि°; C यतुर्दे° । 34 A स्पीतान्; B स्फीतानां । 35 A संश्रये पुरवोच्चिताः; C संश्रये गुरुवोदिताः । 36 A माश्रयेयु; C संश्रययः । 37 C सदा । 38 B C सत्वानां । 39 A दिव्यज्ञान । 40 A भिक्षवः स्वल्प° । 41 B °ग्राह्यं । 42 B सर्वेशि° । 43 A C D उल्काः । 44 A गन्धर्वनगरे । 45 A यात्रामुत्पातकां; C यत्रोत्पातं । 46 A तथा । 47 A पृथकेन । 48 A कृत्स्नतराः; C कृत्स्नः । 49 A स्वमश्च । 50 A तिमित्तानि । 51 A शाकुनं पाकनेव चा ।

ज्योतिषं केवलं कालं वास्तु-दिव्येन्द्रसंपदा[1] । लक्षणं व्यञ्जनं चिह्नं[2] लग्न-विद्यौषधानि च[3] ॥ १८

बला-ऽबलं च सर्वेषां विरोधं च पराजयम् । तत् सर्वमानुपूर्व्येण प्रब्रवीहि महामते[4] ! ॥ १९

सर्वानेतान् यथोद्दिष्टान् भगवन् ! वक्तुमर्हसि । प्रश्नं शुश्रूषवः सर्वे वयमन्ये च साधवः ॥ २०

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते ग्रन्थाङ्ग[5]संचयो नाम प्रथमोऽध्यायः ॥

ततः प्रोवाच भगवान् दिग्वासा[6]: श्रमणोत्तमः । यथावच्छास्त्रविन्यासं[7] द्वादशाङ्गविशारदः ॥ १

भवद्भिर्यद्यहं पृष्टो निमित्तं जिनभाषितम् । समास-व्यासतः सर्वं तन्निबोध[8] यथाविधि ॥ २

प्रकृतेर्योऽन्यथाभावो विकारः सर्व उच्यते । एवं विकारे[9] विज्ञेयं भयं तत् प्रकृतेः सदा[10] ॥ ३

उल्कानां प्रभवं रूपं प्रमाणं फलमाकृतिः । यथावत्[11] संप्रवक्ष्यामि तन्निबोधत तत्त्वतः[12] ॥ ४

भौतिकानां शरीराणां स्वर्गात् प्रच्यवतामिह । संभवश्चा[13]ऽन्तरिक्षे[14] तु तज्ज्ञैरुल्केति संज्ञिता ॥ ५

तत्र तारा तथा धिष्ण्यं विद्युच्चाशनिभिः सह । उल्काविकारा बोद्धव्या ते पतन्ति[15] निमित्ततः ॥ ६

तारातारा प्रमाणं तु[16] धिष्ण्यं तद् द्विगुणं भवेत् । विद्युद्विशाल-कुटिला रूपतः क्षिप्रचारिणी ॥ ७

अशनिश्चक्रसंस्थाना दीर्घा भवति रूपतः । पौरुषी तु भवेदुल्का प्रपतन्ती विवर्धते ॥ ८

चतुर्भागफला तारा धिष्ण्यमर्धफलं भवेत् । [ रक्ताः* पि(पी)तास्तु मध्यास्तु श्वेताः
स्निग्धास्तु पूजिताः ] पूजिताः पद्मसंस्थाना माङ्गल्यास्ताश्च[17] पूजिताः ॥ ९

पापाः पापफलं[18] दद्युः शिवाश्चापि शिवं फलम् । व्यामिश्राश्चापि व्यामिश्रं येषां यैः प्रतिपुद्गलाः ॥ १०

इत्येतावत् समासेन प्रोक्तमुल्कासुलक्षणम् । पृथक्त्वेन प्रवक्ष्यामि लक्षणं व्यासतः पुनः ॥ ११

## ॥ इत्युल्कालक्षणो[19] द्वितीयोऽध्यायः ॥

नक्षत्रं यस्य यत्पुंसः पूर्णमुल्का[20] प्रताडयेत् । भयं तस्य भवेद् घोरं यतस्तत्[21] कम्पते हतम्[22] ॥ १

अनेकवर्णनक्षत्रमुल्का हन्युर्यदा समाः । तस्य देशस्य तावन्ति[23] भयान्युग्राणि निर्दिशेत् ॥ २

येषां वर्णेन संयुक्ता सूर्यादुल्का प्रवर्तते । तेभ्यः संजायते तेषां भयं येषां[24] दिशं[25] पतेत् ॥ ३

नीलाः पतन्ति या उल्काः सस्यं सर्वं विनाशयेत् । त्रिवर्णा त्रीणि घोराणि भयान्युल्का निवेदयेत् ॥ ४

विकीर्यमाणा कपिला विशेषं वामसंस्थिता[26] । खण्डा भ्रमन्त्यो[27] विकृता[28]: सर्वा उल्का भयावहाः ॥ ५

उल्काऽशनिश्च धिष्ण्यं च प्रपतन्ति यतोमुखाः । तस्यां दिशि विजानीयात् ततो भयमुपस्थितम् ॥ ६

सिंह-व्याघ्र-वराहोष्ट्र-द्वीपि-श्वान-खरोपमाः । शूल[29]-पट्टिशसंस्थाना धनु-र्बाण-गदानिभा[30]: ॥ ७

पाश-वज्रासि[31]सदृशाः परश्व-र्धेन्दु[32]संनिभाः । शश-मार्जारसदृशाः पक्ष[33]कोद्[34]ग्रसंनिभाः ॥ ८

गोधा[35]-सर्प-शृगालानां सदृशाः शल्यकस्य च । मेषाज[36]-महिषाकाराः काकाऽऽकृतिवृकोपमाः ॥ ९

---

1 A वसुदिव्येंद्रसंपच; C वासुदेवेन्द्र° । 2 A च्छिन्नं । 3 C तथा दिव्यौषधानि च । 4 A महावपः; B महत्तमः । 5 A अङ्गसंचयो । 6 A C दिग्वासा श्रवणो० । 7 B C यथावस्थासु वि° । 8 B D निबोधय । 9 A विकारो विज्ञेयः । 10 A स प्रकृतेरन्यथागमः । 11 B यथावस्थं प्र० । 12 B यत्नतः । 13 A संभवाश्चातरि° । 14 A C °रिक्षं । 15 B C D निपतन्ति । 16 A C ताराणां । * B आदर्श एवेयं कोष्ठकगता पंक्तिरुपलभ्यते । 17 A D मांगल्यान्ताश्च । 18 A पापघोषफलं; C पापघोरफलं । 19 A B °लक्षणे; C लक्षणं । 20 C °पुंसस्तूर्ण° । 21 A यतस्तत्र । 22 A D हतः । 23 B नाचंति । 24 B तेषां । 25 C दिशिं । 26 B C वामकस्थिताः । 27 C भ्रमन्तः । 28 C विक्रिताः । 29 A मूल° । 30 A गदाकाया; C गदामयाः । 31 C °वज्राणि । 32 A परस्सर्वेन्दु; C परशुखङ्ग° । † This second half is not found in B and D. । 33 B, C, and D पक्षिणः । 34 B, C, and क्रूर° । 35 A योधा । 36 D मेषजे ।

ऋक्ष-वानरसंस्थानाः कबन्धसदृशाश्च याः[1] । अलात[2]-चक्रसदृशा वक्राक्ष[3]प्रतिमाश्च[4] याः[5] ॥ १०

शक्ति-लाङ्गलसंस्थाना[6] यस्याश्चोभयतः[7] शिराः । सा स्तन्यमाना[8] नागाभाः[9] *प्रयतन्ति स्वभावतः ॥ ११

उल्काऽशनिश्च विद्युच्च संपूर्णं कुरुते फलम् । पतन्ती[10] जनपदा त्रीणि उल्का तीव्रं प्रवाधते[11] ॥ १२

यथावदनुपूर्वेण तत् प्रवक्ष्यामि[12] तत्त्वतः । †अग्रतो देश[13]मार्गेण[14] मध्येनानन्तरं[15] ततः[16] ॥ १३

पुच्छेन पृष्ट(ष्ठ)तो देशं पतन्त्युल्का विनाशयेत्[17] । मध्यमा न[18] प्रशस्यन्ते नभस्युल्काः पतन्ति याः ॥ १४

स्नेहवत्यो[19]ऽन्यगामिन्यो प्रशस्ताः स्युः प्रदक्षिणाः । उल्का यदि पतेच्चित्रा[20] पक्षिणा[21]महिताय[22] सा ॥ १५

श्याम-लोहितवर्णा[23][24] च सद्यः कुर्याद् महद्भयम् । उल्कायां भस्मवर्णायां परचक्राऽऽगमो[25] भवेत् ॥ १६

अग्निमग्निप्रभा कुर्याद् व्याधिं[26] माञ्जिष्ठसंनिभा[27] । नीला कृष्णा[28] च[29] धूम्रा च शुक्ला वाऽसिसम[30]‡द्युतिः ॥

उल्का नीचैः समा स्निग्धा पतन्ति(न्ती) भयमादिशेत् ॥ १७

शुक्ला रक्ता च पीता च कृष्णा चापि यथाक्रमम् । चा(च)तुर्वर्णा[31] विभक्तव्या साधुनोक्ता यथाक्रमम् ॥ १८

उदीच्यां ब्राह्मणान् हन्ति प्राच्यामपि च क्षत्रियान् । वैश्यान् निहन्ति याम्यायां प्रतीच्यां शूद्रघातिनी ॥ १९

उल्का रूपेण[32] वर्णेन स्वं स्वं वर्णं[33] प्रवाधते[34] । स्निग्धा चैवानुलोमा च प्रसन्ना च न बाधते ॥ २०

या[35] चादित्यात्[36] पतेदुल्का वर्णतो वा दिशोऽपि वा । तं तं वर्णं निहन्त्याशु वैश्वानर इवार्चिभिः ॥ २१

अनन्तरां[37] दिशं दीप्ता येषामुल्काऽग्रतः पतेत् । तेषां स्त्रियश्च[38] गर्भाश्च भयमिच्छन्ति दारुणम् ॥ २२

कृष्णा नीला च रुक्षाश्च प्रतिलोमाश्च[39] गर्हिताः[40] । पशु-पक्षिसुसंस्थाना[41] भैरवाश्च भयावहाः ॥ २३

अनुगच्छति या उल्का वाह्या तूल्का समन्ततः[42] । वर्णा[43]नुसारिणी नाम सा तु राष्ट्रं विनाशयेत् ॥ २४

¶रक्ता पीता नभस्युल्काः[44] श्येनपाङ्गेन[45] संनिभाः[46] । अन्येषां गर्हितानां च सत्त्वानां सदृशास्तु[47] याः[48] ॥ २५

उल्कास्ता न प्रशस्यन्ते निपतन्त्यः सुदारुणाः । यासु प्रपतमानासु[49] मृगा विविधमानुषाः ॥ २६

शब्दं मुञ्चन्ति दीप्तासु दिक्षु मास[50]न्नकाम्यया[51] । क्रव्यादाश्चाऽऽशु[52] दृश्यन्ते[53] या खरा विकृताश्च याः ॥ २७

सधूम्रा याः सनिर्घाता उल्काश्चावाप्नुयुः । सभूमिकंपाः परुषा रजस्विन्यो[54] ऽपसव्यगाः[55] ॥ २८

ग्रहानादित्य-चन्द्रौ च याः स्पृशन्ति दहन्ति वा । परचक्र[56]भयं[57] घोरं[58] क्षुधा-व्याधि-जनक्षयम् ॥ २९

एवंलक्षण[59][60]संयुक्ताः कुर्वन्त्युल्का महाभयम् । अष्टापदवदुल्काभिर्दिशं[61] पश्येद् यदाऽऽवृताम्[62] ॥ ३०

युगान्त[63] इति विन्द्यात्[64] §भद्रबाहुवचो यथा । पद्म[65]-श्री-वृक्ष[66]-चन्द्रार्क-नन्द्यावर्त्त-घटोपमाः ॥ ३१

---

1 C not found । 2 A आलान° । 3 C D क्रव्यादा । 4 C °सदृशा । 5 C स्रुयाः । 6 C °संकाशा । 7 C याशांतो° । 8 B सूण्यमाना; D शून्यमान । 9 B नागोभाः । * D श्येनवल्मीकसन्निभाः । 10 A C पतन्ति । 11 A B प्रबोधते । 12 B प्रवक्षामि । † Sts from this are numbered as 11, 12 etc in C. 13 B देस° । 14 A °मार्ग्गेण । 15 C D °नांतरतः । 16 D पुनः । 17 B विनाशये । 18 A °नि । 19 AB स्नेहवंतो । 20 A पदे चित्रा; C पतेत्तत्र; D पतच्चित्रा । 21 A D दक्षिणा । 22 C °महताय । 23–24 A वर्णांश्च; B °वर्णाभा । 25 B °चक्रगमो । 26 B व्याधि । 27 C °संप्रभा । 28–29 C °कृतिवर्णा । 30 A ससम° । ‡ B एतद्वर्णं तदाऽऽदिशेत्; D पतेद्वर्षं तदाऽऽदिशेत् । 31 B °वर्णा । 32 A तु क्षण; B D रुक्षेण । 33 A स्व । 34 A प्रबाधतो । 35–36 D यास्त्वादित्यात् । 37 B अनन्तरं; C अनन्तरा; D अनेन यां । 38 B स्त्रिया; C स्त्रियं । 39–40 C सुगार्भताः । 41 A °शस्त्रसुसंस्थाना; C °शस्त्रसंस्था । 42 B समंगता । 43 A वत्सा° । ¶ This first half is missing in D. 44 C स्रुमध्यासु । 45 B चलयंगेन; C श्वेताः स्निग्धाश्च । 46 C पूजिताः । 47–48 A स्त्रयः । 49 A प्रयत्तमानासु । 50 B मासुच° । 51 A° कामया । 52 C व° । 53 C °भाषन्ते । 54 A राज° । 55 A °सत्यगाः; C ससव्यगाः । 56 A B C °चक्रं । 57 B नृपभयं । 58 C it is not found in this Ms. 59–60 A एतल्लक्षण° । 61 B C D दिंनं । 62 BC °वृतम्; D °वृजम् । 63 C पुमांस । 64 BD विद्यांत । § ABD षण्मासान्नोपलभ्यते । 65 B यदा । 66 B चंद्र is twice found in this Ms before and after वृक्ष ।

वर्धमानध्वजाकारा पताका-मत्स्य-कूर्मवत् । वाजि-वारण[1]रूपाश्च शङ्ख-वादित्र-छत्रवत् ॥ ३२
सिंहासन[2]-रथाकारा रूप्यपिण्ड[3]व्यवस्थिता[4]: । रूपैरेतैः प्रकाशन्ते[5] सुखमुल्काः समाहिताः ॥ ३३
नक्षत्राणि विमुञ्चन्त्यः[7] स्निग्धाः प्रत्युत्तमा[8]: शुभाः । सुवृष्टिं क्षेममारोग्यं सस्यसंपत्तिरुत्तमाः ॥ ३४
सोमो राहुश्च शुक्रश्च केतुर्भौमश्च पापिनः[9] । बृहस्पतिर्बुधः सूर्यः सौरि[10]श्चापीह[11] नागराः[12] ॥ ३५
हन्युर्मध्येन सा उल्का ग्रहाणां[13] नाम[14] विद्युता[15] । सनिर्घाता[16] सधूम्रा वा तत्र विन्द्यादिदं फलम् ॥ ३६
नगरे[17]षूपसृष्टेषु[18] नागराणां महद्भयम् । यास्येष्व[19]नुपसृष्टेषु यायिनां[20] तद्भयं भवेत् ॥ ३७
सन्ध्यानां रोहिणी पौष्ण्यं चित्रा[21] त्रीण्युत्तराणि च । मैत्रं चोल्का[22] यदा[23] हन्यात् तदा स्यात् पार्थिवाद् भयम् ॥ ३८
वायवं वैष्णवं पुष्यं यद्युल्काभिः प्रताडयेत् । ब्रह्म-क्षत्र[24]भयं विन्धाद् राज्ञश्च भयमादिशेत् ॥ ३९
यथा ग्रहं तथा ऋक्षं चातुर्वर्ण्यं विभावयेत् । अतः परं प्रवक्ष्यामि सेनासूल्का यथाविधि ॥ ४०
सेनायास्तु समुद्योगे[25] राज्ञां[26] विवदमानयो[27]: । उल्का यदा पतन्तीति तदा वक्ष्यामि लक्षणम् ॥ ४१
उद्गच्छे[28]त् सोममर्कं[29] वा यद्युल्का[30] संविदारये[31]त् । स्थावराणां विपर्यासं अस्मिन्नुत्पातदर्शने ॥ ४२
अस्तं यातमथाऽऽदित्यं सोमं चोल्का लिखेद् यदा । आगन्तुर्वध्यते सेना य*थादेशं यथाऽऽगमम् ॥ ४३
उद्गच्छत्सोममर्कं वा यद्युल्का प्रतिलोमतः । प्रविशेन्नागराणां स्याद् विपर्यासस्तथागते ॥ ४४
एषैवास्तगते[32] उल्का आगन्तूनां भयं भवेत् । प्रतिलोमा भयं कुर्याद् यथास्वं चन्द्र-सूर्ययोः ॥ ४५
उदये भास्करस्योल्का याऽग्रतोऽभि[33]प्रसर्पति । सोमस्यापि जयं कुर्यादेषां पुरस्सरा वृतिः[34] ॥ ४६
सेनामभिमुखी भूत्वा यद्युल्का प्रतिदृश्यते । प्रतिसेनावधं विन्द्या[35]त्तस्मिन्नुत्पातदर्शने ॥ ४७
अथ यद्युभयां सेनामेकैकं प्रतिलोमतः । उल्का तूर्णं प्रपद्येत उभयत्र भयं भवेत् ॥ ४८
श्वेषां सेनासु[36] निपते[37]दुल्का[38] नील[39]महत्प्रभा[40] । सेनापतिव[41]धस्तेषाम[42]चिरात्[43] संप्रजायते ॥ ४९
उल्कास्तु लोहिताः सूक्ष्माः पतन्त्यः पृतनां[44] प्रति । †यस्य राज्ञः प्रपद्यन्तं कुमारो हन्ति तं नृपम् ॥ ५०
‡उल्कास्तु बहवः पीताः पतन्त्यः पृतनां प्रति । पृतनां व्याधितां प्राहुस्तस्मिन्नुत्पातदर्शने ॥ ५१
$बहुशास्वः(?) प्रपद्येरन् उल्काः श्वेताः समंततः । ब्राह्मणेभ्यो भयं घोरं तस्य सैन्यस्य निर्दिशेत् ॥ ५२
उल्का व्यूहेष्वनीकेषु या¶ पतेत्तिर्यगागता । न तदा जायते युद्धं §परिघा नाम सा भवेत् ॥ ५३
उल्का व्यूहेष्वनीकेषु पृष्ठतोऽपि पतन्ति याः । ||क्षय-व्ययेन पीड्येरन्नुभयोः सेनयोर्नृपाः(पान्) ॥ ५४
उल्का व्यूहेष्वनीकेषु प्रतिलोमा[45]: पतन्ति[46] या[47]: । संग्रामेषु निपतन्ति जायन्ते किंशुका[48] वना[49]: ॥ ५५

1 A वारश्च । 2 A स्वस्थासन°; BD स्वस्त्यासन । 3 B °पिंडि°; C विधान । 4 BD °यवस्थिताः C भवनोपमा । 5 B C D प्रशंसंते । 6 A स्वं स्वं; C सम्यक् । 7 A विमुञ्चयन्ते । 8 D प्रत्युन्नता । 9 A योऽपि नः; C योगिनः । 10 A शौरि; D सौर । 11–12 A श्चाचलथावराः । 13 C ग्रहवेताः; D ग्रहवेला । 14 C D it is not found in these Mss. 15 C सविद्युताः; D सविद्युतः । 16 A सनिर्याता । 17 D नागरेषु । 18 A उपसृष्टेषु । 19 A पापिष्ठा; B D याथिपू । 20 A पापिनां । 21 A रात्री । 22–23 A चोभयदा; B चोभयदो । 24 B °छत्र° । 25 A वनुद्योगे । 26 C राज्ञां । 27 C चैव शुभाशुभं । 28 Aउद्गघः; C उद्गच्छन्त । 29 C सोमाक । 30 A B D यद्युल्काभिः । 31 A B D विदारयेत् । * C निर्ग्रंन्थवचनं यथा । 32 A पथैवास्तमने; C एषैवास्तमनं । 33 A पि । 34 BD this is not found in these Mss. 35 A विद्यात् । 36 C सेना । 37 C प्रतिपते । 38 A उल्का is twice found in this Ms. 39 C नीला । 40 C महा° । 41 C °वधं । 42 C विंद्यात् । 43 C रुधिरः । 44 C दृयतां । † C रोगव्याधिं समाख्याति तस्मिन्नुत्पातदर्शने । ‡ C this stanza is not found in this Mss. $ ABD संघशस्त्रानुपद्येत उल्कास्तेषां च मुञ्चति । ¶ A B D या पतंति च सायकाः । § A परिधानमस्याः स्मृतम् । || ABD क्षयं व्ययं तापाश्चरमुभयोरथ सेनयोः । 45 A पृष्ठतो । 46 A निपतन्ति । 47 A या । 48–49 C रक्षकर्दमाः; D केसु काचना ।

उल्का यत्र समायान्ति [*]यथाभावे तथासु च[1] । येषां मध्यान्तिकं[2] यान्ति तेषां स्याद्विजयो ध्रुवम् ॥ ५६

चतुर्दिक्षु यदा पृतना उल्का गच्छन्ति संततम्[3] । चतुर्दिशं तदा[4] यान्ति भयान्युग्राणि[5] संघर्शः[6] ॥ ५७

अग्रतो[7] या पतेदुल्का[8] सा सेना तु[9] प्रशस्यते । तिर्यक् संचरते[10] मार्गं प्रतिलोमी[11] भयावहा ॥ ५८

यतः सेनामभिपतेत्[12] [†]तस्य सेनां प्रबाधयेत् । [‡]विजयं तु समाख्याति येषां सोल्का पुरःसरा ॥ ५९

डिम्भरूपा[13] नृपतये[14] बन्ध[15] मुल्का प्रदापयेत्[16] । प्रतिलोमा विलोमा प्रतिराज्ञो[17] भयं सृजेत्[18] ॥ ६०

यस्यापि जन्मनक्षत्रं उल्का गच्छेच्छरोपमा[19] । [¶]विदारणा तस्य वाच्या व्याधिना वर्णसङ्करैः ॥ ६१

उल्का येषां यथारूपा दृश्यते प्रतिलोमतः । तेषां ततो भयं विन्द्यादनुलोमा शुभागमम् ॥ ६२

उल्का यत्र प्रसर्पन्ति भ्राजमाना दिशोदिशम् । सप्तरात्रान्तरं[20] वर्षं दशाहा[21]दुत्तरं भयम् ॥ ६३

पापासूल्कासु यच्च[22]स्तु यदा देवः प्रवर्षति[23] । प्रशान्तं तद्भयं विन्द्याद् भद्रबाहुवचो यथा ॥ ६४

यथातिवृष्टिः[24] स्निग्धा[25] च दिशि शान्ता पतन्ति याः । उल्कास्वाशु भवेत् क्षेमं सुभिक्षं[26] मन्दरोगवान्[27] ॥ ६५

यथामार्गं यथावृद्धिं यथाद्वारं यथाऽऽगमम् । यथाविकारं विज्ञेयं ततो ब्रूयाच्छुभा-ऽशुभम् ॥ ६६

तिथिश्च करणं चैव नक्षत्राश्च मुहूर्त्ततः । ग्रहाश्च शकुनाश्चैव दिशो वर्णाः प्रमाणतः ॥ ६७

निमित्तादनुपूर्वाश्च पुरुषा(?) कालतो बलात् । प्रभावाश्चागतिश्चैवमुल्कानां फलमादिशेत् ॥ ६८

एतावदुक्तमुल्कानां लक्षणं जिनभाषितम् । परिवेषान् प्रवक्ष्यामि तान्निबोधत तत्त्वतः ॥ ६९

## ॥ इति भद्रबाहुसंहितायां तृतीयोऽध्यायः[28] ॥

अथातः संप्रवक्ष्यामि परिवेषान् यथाक्रमम् । प्रशस्तानप्रशस्तांश्च यथावदनुपूर्वशः[29] ॥ १

पञ्च प्रकारा विज्ञेयाः पञ्च वर्णाश्च भौतिकाः । ग्रह-नक्षत्रयोः कालं परिवेषाः[30] समुत्थिताः[31] ॥ २

रूक्षाः खण्डाश्च वामाश्च[32] क्रव्यादायुधसंनिभाः । अप्रशस्ताः[33] प्रकीर्त्यन्ते[34] विपरीत[35]गुणान्विताः ॥ ३

रात्रौ तु संप्रवक्ष्यामि प्रथमं तेषु लक्षणम् । ततः पश्चाद्दिवा भूयो [36]तन्निबोध[37] यथाक्रमम्[38] ॥ ४

क्षीर-शङ्खनिभ[39]श्चन्द्रे[40] परिवेषो[41] यदा[42] भवेत् । [§]तदा क्षेमं सुभिक्षं च राज्ञो[43] विजय[44]मादिशेत् ॥ ५

सर्पिस्तैलनिकाशस्तु परिवेषो यदा भवेत् । न चाऽऽक्रुष्टोऽतिमात्रं च महामेघस्तदा भवेत् ॥ ६

रूप्य-पारा[45]पताभ[46]श्च परिवेषो यदा भवेत् । महामेघा[47]स्तदाभीक्ष्णं[48] तर्पयन्ति जलैर्महीम् ॥ ७

---

* C अनुकूला सुधर्वसा । 1 A स्वरं । 2 A चोपपत्तिकं । 3 C संघसा; D संततः । 4 A B D यदा । 5 A जुगण°; B जुमन; D स्वगण । 6 A B संघसः । 7 A B अग्रमे । 8 D पतत्युल्का । 9 C D सु° । 10 A ग्गानरवेः; B मानरवे । 11 A प्रतिलोसो । 12 A B मभिपतति । † A तस्य सेनामसौ जयः; BD तस्य सेनामयो जयः । ‡ A B D तं विजयं कुर्यात्तेषां पतेत्सोल्का यदा पुरा । 13 A एवं स्त्रीरूप°; B एवं श्रीरूपा; D एवंरूपा । 14 A °तेय । 15 A °दद्ध; B °द्धय; C वेध । 16 A B प्रतापयेत् । 17 A च नृपति°; B च नृपती । 18 A भवेत्; Cभयङ्करी । 19 A त्वरो°; C D ज्वरो । ¶ C विदार्यमाणाथासज्ञा तस्य पीडा समादिशेत् । 20 C सप्ताहभ्यंतरे । 21 A देशासा; C दशना । 22 D राज्यस्तु । 23 A प्रसर्प्पति । 24 A °भिवृष्ट्या; BD °तिवृष्ट्या । 25 A B स्निग्धार; D स्निग्धया । 26 C ससुभिक्ष । 27 C °मरोगता । 28 B उल्काध्यायः तृतीयः; C उल्कालक्षणं तृतीयाध्यायः । 29 A B D °पूर्वतः । 30 B परिवेषा । 31 B सुपस्थिताः । 32 A वाता । 33 C प्रशस्ता । 34 C न प्रशस्यंते । 35 A B D विपरीता । 36 C it is not found in this Ms. । 37 C निबोधत । 38 D यत्नतः । 39 C °निकाशस्तु । 40 C it is not found in this Ms. । 41 C परिवेषे । 42 A यथा । § C This second half is not found in this Ms. The next stanza also is not found. 43 D राज्ञः । 44 D स्वभय । 45 C °धारा° । 46 C °प्रभावस्तु । 47 A B D °मेघः । 48 C भीक्ष्णं ।

इन्द्रायुधसवर्णस्तु[1] परिवेषो यदा भवेत् । सङ्ग्रामं तत्र जानीयाद् वर्षं[2] चापि जलागमम्[3] ॥ ८
कृष्णे नीले[4] ध्रुवं वर्षं पीते तु व्याधिमादिशेत् । *रूक्षे भस्मनिभे चापि दुर्वृष्टिर्भयमादिशेत् ॥ ९
यदा तु सोममुदितं परिवेषो रुणद्धि हि । जीमूतवर्णस्निग्धश्च महामेघस्तदा भवेत् ॥ १०
अभ्युन्नतो यदा श्वेतो रूक्षः सन्ध्यानिशाकरः । अचिरेणैव कालेन राष्ट्रं चौरैर्विलुप्यते ॥ ११
चन्द्रस्य[7] परिवेषस्तु सर्वरात्रं यदा भवेत् । शस्त्रं जनक्षयं चैव तस्मिन् देशे विनिर्दिशेत् ॥ १२
भास्करं तु यदा रूक्षः परिवेषो रुणद्धि हि । तदा मरणमाख्याति नागरस्य[8] महीपतेः ॥ १३
आदित्यपरिवेषस्तु यदा सर्वदिनं भवेत् । क्षुद्भयं जनमारिश्च शस्त्रकोपं च निर्दिशेत् ॥ १४
हरिते[9] सर्वसस्यानामीतिर्भवति[10] दारुणा । वृक्ष-गुल्म-लतानां च †वर्त्तनीनां[11] तथैव च ॥ १५
यतः खण्डस्तु दृश्येत ततः प्रविशते परः[12] । प्रयत्नं[13] तत्र[14] कुर्वीत[15] रक्षणे पुर-राष्ट्रयोः ॥ १६
रक्तो[16] वा यदाभ्युदितं[17] कृष्णपर्यन्त एव च[18] । परिवेषो रविं[19] रुन्ध्याद्[20] राजव्यसनमादिशेत्[21] ॥ १७
यदा त्रिवर्णपर्यन्तं[22][23] परिवेषो दिवाकरम् । तद्राष्ट्रमचिरात्[24] कालाद् दस्युभिः[25] परिलुप्यते[26] ॥ १८
हरितो नीलपर्यन्तः परिवेषो यदा भवेत् । आदित्ये यदि वा सोमे राजव्यसनमादिशेत्[27] ॥ १९
दिवाकरं बहुविधः[28] परिवेषो रुणद्धि हि । †राष्ट्रक्षोभो भवेत् तस्य गवां मरणमादिशेत्[29] ॥ २०
‡यदाभिमुच्यते[30] शीघ्रं दिवसैश्चाभिवर्धते[31][32] । गवां विलोपमपि च तस्य राष्ट्रस्य निर्दिशेत् ॥ २१
अंशुमाली[33] यदा तु स्यात् परिवेषः समन्ततः । तदा सपुरराष्ट्रस्य देशस्य रुजमादिशेत् ॥ २२
ग्रह-नक्षत्र-चन्द्राणां परिवेषः प्रगृह्यते[34] । अभीक्ष्णं यत्र वर्तते(र्तेत?)तं देशं परिवर्जयेत् ॥ २३
परिवेषो विरुद्धेषु नक्षत्रेषु ग्रहेषु च । कालेषु वृष्टिर्विज्ञेया भयमन्यत्र[35] निर्दिशेत्[36] ॥ २४
अभ्रशक्तिर्यतो गच्छेत् तां[37] दिशं[38] त्वभियोजयेत्[39] । रक्तां[40] वा[41] विपुलां चाग्रे जयं कुर्वति शाश्वतम्[42] ॥ २५
यदाऽभ्रशक्तिर्दृश्येत परिवेष[43]समन्विता[44] । नागरा यायिनो[45] हन्युस्तदा यत्नेन संयुगे ॥ २६
नानारूपो यदा दण्डः परिवेषं[46] प्रमर्दति[47] । नागरास्तत्र बाध्यन्ते[48] यायिनो[49] नात्र संशयः ॥ २७
त्रिकोणो[50] यदि दृश्येत परिवेषः[51] कथञ्चन । त्रिभागशस्त्र[52]वध्योऽसाविति निर्ग्रन्थशासने ॥ २८
चतुरस्रो यदा चापि परिवेषः प्रकाशते । क्षुधया व्याधिभिश्चापि चतुर्भागो विशिष्यते ॥ २९
अर्धचन्द्रनिकाशस्तु परिवेषो रुणद्धि[53] हि[54] । आदित्यं[55] यदि वा सोमं[56] राष्ट्रं सङ्कुलतां व्रजेत् ॥ ३०
प्राकारा[57]ट्टालिका[58]प्रख्यः[59] परिवेषो रुणद्धि हि । आदित्यं यदि वा सोमं पुररोधं निवेदयेत् ॥ ३१

---

1 A B °सुवर्णः । 2 C वर्षः । 3 C °गमे । 4 B D नील । * Before this there is one more line in C which is as under:–नक्षत्रप्रतिमानस्तु महामेघस्तदा भवेत् । 5 A D दुर्वृष्टिः । 6 D °वर्णः । 7 A B D चंद्रश्च । 8 C सागरस्य । 9 B D हरते । 10 B D इतिः; C इंतिः । † C तस्मिन्नुत्पातदर्शने ॥ 11 D वर्तवानां । 12 A अपरः । 13 A B D ततः । 14 A B D प्रयत्नं । 15 C कुर्वंति । 16 A रक्तं । 17 C अभ्युदयेत् । 18 D खे । 19 A B रवी; D रवि । 20 C विम्यात् । 21 A राजा; C राज्ञा । 22 B C D त्रिवर्णो । 23 B C D पर्यंति । 24 A तद् द्रष्टु । 25 A त्रिश्चयेन । 26 B C विलुप्यते; D परितप्पते । 27 C राज्ञा । 28 C °विधं । † A B D भिद्यते बहुधा वापि । 29 C हरण° । ‡ C This and the following stanza are not found in C. 30 A भिमुख्यते; B भिमुच्येत । 31 B D दिशः । 32 D °भिमुच्यते । 33 B अर्थांमाली; D अर्थमाली । 34 A B परिगृह्यते; C परिग्रहेत् । 35 B D अन्यात् । 36 B D मादिशेत् । 37 A B D तं । 38 A देशं । 39 C त्रिभियोजयेत् । 40–41 B रिक्तांता; C रक्तांगा; D रक्तांतां । 42 C सातसः । 43 C परिवेषः । 44 C समुत्थिता । 45 A D गायिनो, C याविनं । 46 B परिवेषा; C परिवेषः । 47 C D प्रवर्द्धते । 48 A B वर्द्धन्ते; D बध्यन्ते । 49 A B पायिनो । 50 A B D त्रिकोटिः । 51 A परिवेषं । 52 C °सूत्र° । 53–54 A B D प्रकाशते । 55 A आदित्ये । 56 A सोमे । 57 B D प्रकार° । 58 B °ज्वलक°; C D °अट्टालक° । 59 C °आकारः ।

समन्ताद् वेष्टते[1] यस्तु मुच्यते च मुहुर्मुहुः । सङ्ग्रामं तत्र जानीयाद् दारुणं[2] पर्युपस्थितम्[3] ॥ ३२
यदा ग्रहमवच्छाद्य परिवेषः प्रकाशते । अचिरेणैव कालेन *सङ्कुलं[4] तत्र जायते ॥ ३३
†यदि राहुमपि प्राप्तं परिवेषो रुणद्धि चेत् । तदा सुवृष्टिर्जानीयाद् व्याधिस्तत्र भयं भवेत् ॥ ३४
‡पूर्वसंध्यां[5] नागराणामागन्तूनां च पश्चिमां[6] । अर्धरात्रेषु राष्ट्रस्य मध्याह्ने राज्ञ उच्यते ॥ ३५
धूमकेतुं च सोमं च नक्षत्रं च रुणद्धि हि । §परिवेषो यदा राहुं[7] तदा यात्रा न सिद्ध्यति ॥ ३६
यदा तु ग्रह-नक्षत्रे[8] परिवेषो रुणद्धि हि । अभावस्तस्य देशस्य विज्ञेयः पर्युपस्थितः ॥ ३७
त्रीणि यत्र[9] विरुध्यन्ते नक्षत्रं चन्द्रमा ग्रहः । त्र्यहाद्[10] वा जायते[11] वर्षं मासाद् वा जायते भयम् ॥ ३८
¶उल्कावत् साधनं ज्ञेयं परिवेषेषु[12] तत्त्वतः । $लक्षणं संप्रवक्ष्यामि विद्युतां[13] [14]तन्निबोधत ॥ ३९

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते परिवेषो[15]ऽध्यायश्चतुर्थः ॥

अथातः संप्रवक्ष्यामि विद्युतां[16] नामविस्तरम् । प्रशस्ता[17] वाऽप्रशस्ता[18] च यथावदनुपूर्वशः[19] ॥ १
सौदामिनी च पूर्वा च कुम्भ[20]हेमो[21]त्पला[22] शुभा । निरभ्रा[23] मिश्रकेशी च क्षिप्रगा चाशनि[24]स्तथा[25] ॥ २
एतासां नामभिर्वर्षं ज्ञेयं कर्मभि[26]रुक्तितः[27] । भूयो व्यासेन वक्ष्यामि प्राणिनां पुण्यशालिनाम्[28] ॥ ३
स्निग्धास्निग्धेषु चाभ्रेषु विद्युत् प्राच्यां जलावहा । कृष्णा तु कृष्णमार्गस्था वातवर्षावहा[29] भवेत् ॥ ४
अथ रश्मिमती[30] स्निग्धा हरिता हरितप्रभा । दक्षिणा दक्षिणावर्त्ता[31] कुर्यादुदकसंप्लवम्[32] ॥ ५
‖रश्मिमती[33] मोदिनी[34] भाति विद्युदपरदक्षिणे[35] । **हरिता भाति रोमाञ्चं[36] सोदकं[37] पातयेद्[38] बहुं[39] ॥ ६
अपरेणं[40] तु या विद्युच्चरते चोत्तरामुखी । कृष्णाभ्रसंस्थिता[41] स्निग्धा साऽपि कुर्याज्जलागमम्[42] ॥ ७
††अपरोत्तरा तु या विद्युत् मन्दतोया हि सा स्मृता । उदीच्यां श्यामवर्णस्था[43] रूक्षा[44] तु सा[45] तु[46] वर्षति ॥ ८
या तु पूर्वोत्तरा विद्युद् दक्षिणा[47] च पलायते । चरत्यूर्ध्वं च तिर्यग् सा साऽपि[48] श्वेता जलावहा ॥ ९
‡‡तथैवोर्द्धमधो वाऽपि स्निग्धा रश्मिमती भृशम् । सघोषा चाप्यघोषा च दिक्षु सर्वासु वर्षति ॥ १०
शिशिरे चापि वर्षन्ति रक्ताः पीताश्च विद्युतः । §§नीलाः श्वेता वसन्तेषु न वर्षन्ति कथञ्चन ॥ ११
¶¶हरिता मधुवर्णाश्च ग्रीष्मे रूक्षा[49]श्च निश्चलाः । भवन्ति ताम्र-[50]गौरा[51]श्च वर्षास्वपि[52] निरोधकाः ॥ १२

---

1 A B D बध्यते । 2 C शीघ्रं । 3 C पर्युरुपस्थितम् । * C भयमाख्याति दारुणम् ॥ 4 A सङ्ग्रामं । † This stanza is thus found in C:—राहुणा वेयदासार्द्धं परिवेषो रुणद्धि हि । तदा भ्रष्टं विजानीयाद्व्याधिमत्र भयं भवेत् ॥ ‡ C नागरात्पूर्वसंध्या । 5 A °संख्या । 6 A पश्चिमः; C पश्चिमं । § This line and the next line also are not found in C and D. 7 A राज्ञः । 8 A °नक्षत्रं । 9 A B यात्रा । 10 A त्र्यहा; B अहात् । 11 A B विजायते । ¶ This stanza is not found in B. 12 A परिवेषो तु । $ C ......लक्षणं तं निबोधत ॥ 13-14 A विद्युतान् । 15 B परिवेषोन्मरणो नाम । 16 B D विद्युता । 17 C प्रशस्तान्; D प्रशस्तम् । 18 C अप्रशस्तान्; D अप्रशस्तम् । 19 B अनुपूर्वसः । 20-22 A B D कुमुदोत्पलनिभा । 23 C विरभ्रा । 24 C त्रासिनी । 25 A स्थिता; C यथा । 26 B C D कर्म° । 27 B C D निरुक्तितः । 28 B C °पापजाम्; D °पंकजा । 29 C महा; D °हर्षावहा । 30 A B °गता; C °वती । 31 C °वर्त्ती । 32 A B °संभवा । ‖ C सुरश्मिकनकाभाले । 33 B °वती । 34 B D मेदिनी । 35 B विद्युतापदक्षिणे; C विद्युदापरदक्षिणा; D विद्युदपरदक्षिणा । ** C हरितां तां प्रभासेत् । 36 B रोमाञ्च; D रोमाञ्चा । 37 D सादिकं । 38 B पतयेत्; C पावयेत् । 39 B C D बहुम् । 40 A C अरुणोदये । 41 B D °संश्रिता । 42 A °जलागमः । †† C अपरोत्तरा मंदतोया अहिता सा विधीयते । 43 B D सार्वं; C सर्वं । 44 A तक्षात् । 45-46 D These two words are missing. 47 A दक्षिणं । 48 D not found. ‡‡ A वार्द्धमथाऽप्यपि । §§ C हेमन्ते ताम्रवर्णास्तु तडितो निर्जलाः स्मृताः ॥ ¶¶ This and the following stanza are not found in C. 49 A तक्षा । 50 D नाम्रा । 51 D गोरा । 52 A B श्रापि ।

शारदी(द्यो) नाभिवर्षन्ति नीला वर्षाश्च विद्युतः। हेमन्ते श्यामताम्रास्तु तडितो निर्जलाः स्मृताः ॥ १३
रक्तारक्तेषु चाभ्रेषु हरिताहरितेषु च। नीलानीलेषु वा स्निग्धा वर्षन्तेऽनिष्टयोनिषु ॥ १४
अथ नीलाश्च पीताश्च रक्ताः श्वेताश्च विद्युतः। एतां श्वेतां पतत्यूर्ध्वं विद्युदुदकसंप्लवम् ॥ १५
वैश्वानरपथे विद्युत् श्वेता रूक्षा चरेद् यतः[10]। विन्द्यात् तदाऽशनिवर्ष[11][12] रक्तायामग्नितो भयम् ॥ १६
यदा श्वेताऽभ्रवृक्षस्य विद्युच्छिरसि संचरेत्। अथ वा[13] ग्रहयोर्मध्ये वातवर्षं सृजेन्महत् ॥ १७
अथ चन्द्राद् विनिष्क्रम्य विद्युन्मण्डलसंस्थिता। श्वेताऽऽभां[14] प्रविशेदर्कं विन्द्यादुदकसंप्लवम् ॥ १८
अथ सूर्याद् विनिष्क्रम्य रक्ता समलिना[16] भवेत्। प्रविश्य सोमं वा तस्य[17] तत्र[18] वृष्टिर्भयङ्करा ॥ १९
विद्युतं[20] तु[21] यथा[22] विद्युत्[23] ताडयेत् प्रविशेदथ[24]। अन्योऽन्यं चालिखेयातां वर्षं विन्द्यात् तदाऽशुभम्[25] ॥ २०
राहुणा संवृतं चन्द्रमादित्यं चापि सर्वतः[26]। कुर्याद् विद्युद् यदा[27] साभ्रा[28] तदा सस्यं न रोहति ॥ २१
नीला ताम्रा च गौरी च श्वेता वाऽभ्रान्तरं चरेत्। सघोषा[29] मन्दघोषा[30] वा विन्द्यादुदकसंप्लवम् ॥ २२
मध्यमे मध्यमं वर्षं अधमे अधमं दिशेत्। उत्तमं चोत्तमे मार्गे चरन्तीनां च विद्युताम् ॥ २३
वीथ्यन्तरेषु[31] या विद्युच्चरतां[32]मफलं[33] विदुः। अभीक्ष्णं दर्शयेच्चापि तत्र दूरगतं[34] फलम् ॥ २४
उल्कावत् साधनं ज्ञेयं विद्युतामपि तत्त्वतः। अत्राभ्राणां[35] प्रवक्ष्यामि[36] लक्षणं[37] तन्निबोधत[38] ॥ २५

**॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते विद्युल्लक्षणं नाम पञ्चमोऽध्यायः ॥**

---

अभ्राणां लक्षणं कृत्स्नं[39] प्रवक्ष्यामि यथाक्रमम्। प्रशस्तम[40]प्रशस्तं[41] च [42]तन्निबोधत तत्त्वतः ॥ १
स्निग्धाण्यभ्राणि यावन्ति वर्षदानि न संशयः। उत्तरं मार्गमाश्रित्य तिथौ मुखे[43] यदा भवेत् ॥ २
उदीच्यान्यथ पूर्वाणि वर्षदानि शिवानि[44] च। दक्षिणाण्य(न्य)पराणि स्युः समूत्राणि[45] न संशयः[46] ॥ ३
कृष्णानि पीत-ताम्राणि श्वेतानि[47] च[48] यदा भवेत्। श्वयोनिदिशमा[49]सृत्य वर्षदानि शिवानि[50] च ॥ ४
अम्बराणां[51] च सत्त्वानां[52] सदृशानि[53] चराणि[54] च। सुस्निग्धानि च यानि स्युर्वर्षदानि शुभानि[55] च ॥ ५
शुक्लानि[56] स्निग्धवर्णानि विद्यु[57]च्चित्र[58]-घनानि च। सद्यो वर्षं समाख्यान्ति तान्यभ्राणि न संशयः ॥ ६
शकुनैः कारणै[59]श्चापि संभवन्ति शुभैर्यदा। तदा वर्षं च क्षेमं च सुभिक्षं च जयं भवेत्[60] ॥ ७
पक्षिणां द्विपदानां च सदृशानि यदा भवेत्। चतुःपदानां[61] सौम्यानां तदा विन्द्यान्महज्जलम्[62] ॥ ८
यदा राज्ञः[63] प्रयाणे[64] तु यान्त्यभ्राणि शुभानि[65] च[66]। अनुमार्गाणि[67] स्निग्धानि तदा राज्ञो जयं वदेत्[68] ॥ ९

---

1 B चान्येषु। 2 C हिम्व°। 3 A not found. 4 A not found. 5 A श्वेता is doubly found here. 6–7 C तान्यतमत्। 8 C विद्यात्। 9–10 B च विद्युता। 11–12 B सनिर्घोषं; C सनीवर्षं; D सनिव। 13 A मे; B प्रथमे। 14 C श्वेता च; D स्वतनो। 15 C तदा। 16 C सा शलिला। 17 C नश्येत। 18 C सा तु। 19 C वृष्टि। 20 A B D विद्युत्। 21–22 A B D विद्युद्। 23 A B D यदाभूत्वा। 24 A B D तदा। 25 B C D शुभम्। 26 A सव्यते; B सेव्यतः। 27 A B विद्युदा; C विद्युता। 28 B साचा; C साऽभ्रं। 29 C अघोषा। 30 C वाऽप्यघोषा। * A B D दक्षिणाकल्पसंभवे। 31 C दीर्घांतरेषु। 32 A B चरं; D चारतां। 33 A वामफलं; B स्वामफलं; C सफलं। 34 B दूरा°। 35 C अभ्रणां। 36 C संप्रवक्ष्यामि। 37 C लक्षणानि। 38 C निबोधत। 39 C तस्सं। 40 A B D प्रशस्तान्। 41 A B D अप्रशस्तान्। 42 A B D तान्। 43 A मुख्यो; C मुख्ये। 44 C शुभानि। 45 C सुमुहूर्तानि। 46 C सर्वशः। 47 A स्वेतानि। 48 A not found. 49 A D तयोनिर्देश°; B तयोर्देशस°। 50 A सिवानि। 51 A B D अप्सराणां। 52 A सत्तानां; B D सत्तानाम्। 53 B सदृशा°। 54 A B चरणानि; C अपराणि। 55 B शिवानि। 56 A सुक्लानि। 57 A B D बिंदु°। 58 D °द्विनि°। 59 A B D करणैः। 60 A वदेत्। 61 C °पदां च। 62 A B D जयं वदेत्। 63 A राज°। 64 A °प्रयाणैः; C संप्रयाणे। 65–66 A B D शुभान्यथा। 67 C अभ्र°। 68 C भवेत्।

स्वायुधानां[1]मश्वानां[2] हस्तिनां सदृशानि च । यान्यग्रतो प्रधावन्ति[3] जयमाख्यान्त्युपस्थितम् ॥ १०
*ध्वजानां च पताकानां घण्टानां तोरणस्य च । सदृशान्यग्रतो यान्ति जयमाख्यान्त्युपस्थितम् ॥ ११
शुक्लानि स्निग्धवर्णानि पुरस्तात्[4] पृष्ठतोऽपि वा । अभ्राणि[5] दीप्तरूपाणि जयमाख्यान्त्युपस्थितम् ॥ १२
चतुःपदानां[6] पक्षीणां[7] क्रव्यादानां च दंष्ट्रिणाम्[8] । सदृशप्रतिलोमानि ‡वधमाख्यान्त्युपस्थितम् ॥ १३
†असि-शक्ति-तोमराणां खड्गानां चक्र-चर्मणां । सदृशप्रतिलोमानि सङ्ग्रामं तेषु निर्दिशेत् ॥ १४
धनुषां कवचानां[9] च[10] वालानां सदृशानि च । खण्डान्यभ्राणि रूक्षाणि सङ्ग्रामं तेषु[11] निर्दिशेत्[12] ॥ १५
नानारूपप्रहरणैः सर्वे यान्ति परस्परम् । सङ्ग्रामं तेषु जानीयादतुलं प्रत्युपस्थितम् ॥ १६
अभ्र-वृक्षं[13] समुच्छाद्य योऽ[14]नुलोमं[15]समं व्रजेत् । यस्य राज्ञो वधस्तस्य भद्रबाहुवचो यथा ॥ १७
बालाऽभ्र-वृक्षं[16]सरणं कुमारामात्ययोर्वदेत् । एवमेवं च विज्ञेयं प्रतिराज्ञां[17] यदा भवेत् ॥ १८
तिर्यक्षु[18] यानि गच्छन्ति रूक्षाणि[19] च घनानि च । निवर्त्तयन्ति तान्याशु चमूं[20] सर्वां[21] सनायकाम्[22] ॥ १९
अभिद्रवन्ति घोषेण[23] महता यां चमूं पुनः । सविद्युतानि वाऽभ्राणि तदा विन्द्याच्चमूवधम् ॥ २०
रुधिरो-दक-वर्णानि निम्बगन्धीनि[24] यानि च । व्रजन्त्य[25]भ्राणि अत्यन्तं[26] सङ्ग्रामं तेषु निर्दिशेत् ॥ २१
विस्वरं[27] रवमाणाश्च शकुना यान्ति पृष्ठतः । यदा[28] चाभ्राणि[29] धूम्राणि[30] तदा विन्द्यान्महद्[31] भयम्[32] ॥ २२
मलिनानि विवर्णानि[33] दीप्तायां दिशि यानि च । दीप्तान्येव यदा यान्ति भयमाख्यान्त्युपस्थितम् ॥ २३
सग्रहे[34] वाऽपि नक्षत्रे ग्रहयुद्धे[35] शुभे तिथौ । सम्भ्र[36]मन्ति[37] यदाऽभ्राणि तदा विन्द्यान्महद्भयम् ॥ २४
‡मुहूर्त्ते शकुने वाऽपि निमित्ते वा शुभे यदा । सम्भ्रमन्ति यदाऽभ्राणि तदा विन्द्यान्महद्भयम् ॥ २५
अभ्रशक्तिर्यतो गच्छेत् तां दिशं त्वभियोजयेत् । विपुला क्षिप्रगा[38] स्निग्धा जयमाख्याति निर्भयम् ॥ २६
यदा तु धान्यसङ्घानां[39] सदृशानि[40] भवन्ति हि । अभ्राणि तोयवर्णानि सस्यं तेषु समृद्ध्यति ॥ २७
विरागान्य[41]नुलोमानि शुक्ल-रक्तानि यानि च । §स्थावराणीति[42] जानीयात्[43] स्थावराणां च संश्रये[44] ॥ २८
क्षिप्रगानि विलोमानि नील-पीतानि यानि च । चलानीति[45] विजानीयां[46]चलानां[47] च समागमे[48] ॥ २९
स्थावराणां जयं विन्द्यात्स्थावराणां द्युतिर्यदा । यायिनां[49] च जयं विन्द्याचलां[50]भ्राणां द्युतावपि ॥ ३०
राज्ञां[51] तत्प्रतिरू[52]पैस्तु ज्ञेयान्यभ्राणि सर्वशः[53] । तत्[54] सर्वं[55] सफलं[56] विन्द्या[57]च्छुभं वा यदि वाऽशुभम् ॥ ३१

## ॥ इति नि(नै)र्ग्रन्थे भद्रबाहुके निमित्ते अभ्रलक्षणो नाम षष्ठोऽध्यायः ॥

---

1 B D रथायुधानां; C यदाऽऽयुधानाम् । 2 A सस्थानाम्; B D सस्वानाम् । 3 C अभिधावन्ति । * C This stanza is not found in this Ms. 4 B पुरतः । 5 B अभ्राणां । 6 A °पदानां च । 7 C पक्षाणां । 8 C पक्षिणां । ‡ D संग्रामं तेषु निर्दिशेत् । † This stanza is missing both in C and D. 9-10 C घनयानानां । 11 C ते । 12 C विनिर्दिशेत् । 13 A अत्र वृक्ष; B अभ्र वृक्ष; D स्वभवृक्षः । 14 B योन्यां । 15 C °लोमं । 16 A °भ्यक्ष°; B °भिमरणं वृक्षे; D °भ्राणिक्ष । 17 B प्रतिन्यानां; C प्रतिराज्ञ°; D प्रतिराज्ञा । 18 C तिर्यंचि । 19 A D रूपाणि; C वृक्षाणि । 20 A श्वेत्वन्; D चमुः । 21 A सर्वान्; B सर्वां; D सर्वं । 22 C च नायकां; D सिनायकां । 23 C घोरेण । 24 C विषं । 25 A B D व्रजन्त्यभ्रामतोऽ । 26 A B D not found. 27 A C विश्वरं । 28-29 A B D यान्यभ्राणि । 30 A B D सधूमानि । 31-32 A महाभयम्; B D भयं महत् । 33 A त्रिवर्णानि । 34 A सग्राहे; B संग्रहे । 35 C अभ्रमुक्ते । 36 A सम । 37 C भवंति । ‡ C This stanza is not found. 38 C दक्षिणा । 39 A वात्यसन्धानां । 40 A सदृशानां । 41 A विरगानि । § This line as well as the next stanza are not found in B. 42 A स्थावराणां । 43 A विजानीयात् । 44 C D संश्रयेत् । 45 A वलानीति; D चञ्चलानीति । 46 D जानीयात् । 47 A चूलानाम् । 48 A समागमम् । 49 A चूला° । 50 C जायिनां । 51 C तज्ञां । 52 C तिप्रति° । 53 C सर्वतः । 54 C ततः । 55-56 C सर्वमलं । 57 B C बूयात् ।

अथातः संप्रवक्ष्यामि सन्ध्यानां लक्षणं ततः[1] । प्रशस्तमप्रशस्तं च यथातत्त्वं निबोधत ॥ १

उद्गच्छमाने वाऽऽदित्ये यदा सन्ध्या विराजते । नागराणां जयं विन्द्यादस्तं गच्छति यायिनाम्[2] ॥ २

उद्गच्छमाने वाऽऽदित्ये शुक्ला सन्ध्या यदा भवेत् । उत्तरेण गतो[3] सौम्या ब्राह्मणानां जयं विदुः ॥ ३

उद्गच्छमाने वाऽऽदित्ये रक्ता सन्ध्या यदा भवेत् । पूर्वेण च गता सौम्या क्षत्रियाणां जयावहा ॥ ४

उद्गच्छमाने वाऽऽदित्ये पीता सन्ध्या यदा भवेत् । दक्षिणेन गता सौम्या वैश्यानां सा[4] जयावहा[5] ॥ ५

उद्गच्छमाने वाऽऽदित्ये कृष्णसन्ध्या यदा भवेत् । अपरेण गता सौम्या शूद्राणां च जयावहा[6] ॥ ६

सन्ध्योत्तरा जयं कुर्यात्[7] दक्षिणा[8] च[9] पराजयम् । पूर्वा क्षेमं सुभिक्षं च पश्चिमा तु भयङ्करा ॥ ७

आग्नेयी[10] अग्निमाख्याति नैर्ऋती राष्ट्रनाशिनी । वायव्यां[11] वर्षणं[12] हन्यात्[13] ईशानी च शुभावहा ॥ ८

एवं संपत्करार्थेषु[14] नक्षत्रेष्वपि निर्दिशेत् । जयं सा कुरुते सन्ध्या साधकेषु समुत्थिता ॥ ९

उदयास्तमनेऽर्कस्य यान्यभ्राण्यग्रतो भवेत् । सप्रभाणि सरश्मीनि तानि सन्ध्या विनिर्दिशेत् ॥ १०

अभ्राणां यानि रूपाणि सौम्यानि विकृतानि[15] च । सर्वाणि तानि सन्ध्यायां[16] तथैव प्रतिचारयेत् ॥ ११

एवमस्तमने काले यां[17] सन्ध्यां[18] सर्व उच्यते । लक्षणं यत्[19] तु[20] सन्ध्यानां[21] *शुभं च यदि वाऽशुभम् ॥ १२

स्निग्धवर्णमती सन्ध्या वर्षदा सर्वशो भवेत् । सर्वा[22]वीथिगता वाऽपि सुनक्षत्रां[23] विशेषतः ॥ १३

सर्वरात्रं[24]परिवेषां[25] सविद्युत्[26]परिखायुता । सरश्मी[27] सर्वशः[28] सन्ध्यां[29] सद्यो वर्षं प्रयच्छति ॥ १४

प्रतिसूर्यागमस्ताच्च शक्रचाप[30]रजस्तथा । सन्ध्यायां यदि दृश्यन्ते सद्यो वर्षं प्रयच्छति ॥ १५

सन्ध्यायामेकरश्मिं तु यदा सृजति भास्करः । उदितेऽस्तमिते चापि विन्द्याद् वर्षमुपस्थितम् ॥ १६

आदित्यपरिवेषस्तु सन्ध्यायां यदि दृश्यते । वर्षं महद् विजानीयाद् भयं वाऽर्थं[31] प्रवर्षणे[32] ॥ १७

त्रिमण्डलपरिक्षिप्तो अथवा पञ्चमण्डलः । सन्ध्यायां दृश्यते सूर्यो महावर्षस्य[33] संभवः ॥ १८

द्योतयन्ती दिशः सर्वा यदा सन्ध्या प्रदृश्यते । महामेघं[34] तदा विन्द्याद् भद्रबाहुवचो यथा ॥ १९

सर-स्तडाग-प्रतिमा–कूप-कुम्भनिभा च या । यदा दृश्यति सुस्निग्धा सा सन्ध्या वर्षदा स्मृता[35] ॥ २०

धूम्रवर्णा बहुच्छिद्रा खण्डपापसमा यदा । या सन्ध्या दृश्यते नित्यं सा तु राज्ञो भयङ्करा ॥ २१

अनावृष्टिभयं रोगं[36] दुर्भिक्षं राजविद्रवम्[37] । रूक्षायां विकृतायां च सन्ध्यायां च विनिर्दिशेत् ॥ २२

द्विपदाश्चतुःपदाः क्रूराः पक्षिणस्तु भयङ्कराः । सन्ध्यायां यदि दृश्यन्ते भयमाख्यान्त्यु[38]पस्थितम् ॥ २३

विंशतिर्योजनानि स्युर्विद्युद्भाति च सुप्रभा । ततोऽधिकं तु स्वनितं[39] अभ्रं यत्रैव दृश्यते ॥ २४

पञ्चयोजनिका सन्ध्या वायुवर्षं च दूरतः । त्रिरात्रा(त्रं) सप्तरात्रा(त्रं) च सद्यो वा पाकमादिशेत् ॥ २५

उल्कावत् साधनं सर्वं सन्ध्यायामभिनिर्दिशेत् । अतः परं प्रवक्ष्यामि मेघानां तन्निबोधत ॥ २६

**॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते सन्ध्यालक्षणं नाम सप्तमोऽध्यायः ॥**

---

1 C त्विह । 2 C जायिनाम् । 3 A गतो । 4 C च । 5 B यथावहा; C जयङ्करा । 6 B यथावहा; C जयङ्करा । 7 A B राज्ञः । 8–9 B सन्ध्या कुर्यात् । 10 A अग्नेइ । 11 C वर्षं । 12 C हन्यात् । 13 C तु वायव्या । 14 C संयुक्तरागेषु । 15 C विनतानि । 16 C सा सन्ध्या । 17–18 C यायिनां । 19–21 C उदये चापि । * C स्थावराणां शुभाशुभम् ॥ 22 C सर्वं॰ । 23 C नक्षत्राणि । 24 C साकारा । 25 C सपरिवेषा । 26 A सविद्युता । 27 C सुरश्मिः । 28–29 C सर्वसन्ध्यायां । 30 A सध्रुवं । 31–32 A चावर्षणे पुनः । 33 A ॰वृक्षस्य । 34 A मेघा; B D ॰मेघः । 35 C शिवा । 36 C घोरं । 37 A C ॰विड्वरम्; B ॰विस्तरम् । 38 A विद्यात् । 39 B स्तनितं; C च ततं ।

अतः परं प्रवक्ष्यामि मेघानामपि लक्षणम् । प्रशस्तमप्रशस्तं च यथावदनुपूर्वशः ॥ १

यदाञ्जननिभो मेघः शान्तायां दिशि[1] दृश्यते । स्निग्धो मन्दगतिश्चापि तदा विन्द्याजलं शुभम् ॥ २

शुक्लवर्णो यदा मेघः शान्तायां दिशि दृश्यते । स्निग्धो मन्दगतिश्चापि निवृत्तः स जलावहः ॥ ३

स्निग्धाः सर्वेषु वर्णेषु स्वां दिशं संसृता यदा । सवर्णविजयं कुर्युर्दिक्षु शान्तासु ये स्थिताः ॥ ४

यथास्थितं शुभं मेघमनुपश्यन्ति[7] पक्षिणः[8] । जलाशया जलधरास्तदा विन्द्याज्जलं शिवम् ॥ ५

स्निग्धवर्णाश्च ये मेघा स्निग्धनादाश्च ये सदा । मन्दगाः सुमुहूर्ताश्च ते सर्वत्र जलावहाः ॥ ६

सुगन्धगन्धा ये मेघाः सुस्वराः[10] स्वादुसंस्थिताः । मधुरोदकास्तु[11] ये मेघा[12] जलाय[13] जलदास्तथा ॥ ७

मेघा[14] यदाऽभिवर्षन्ति प्रयाणे पृथिवीपतेः । मधुरा[15] मधुरेणैव[16] तदा सन्धिर्भविष्यति ॥ ८

पृष्ठतो वर्षतः श्रेष्ठं[17] अग्रतो विजयङ्करम् । मेघाः कुर्वन्ति ये दूरे सगर्जित-सविद्युतः ॥ ९

मेघशब्देन महता यदा निर्याति पार्थिवः । पृष्ठतो गर्जमानेन[18] तदा जयति दुर्जयम्[19] ॥ १०

मेघशब्देन महता यदा तिर्यग् प्रधावति । न तत्र जायते युद्धं[20] उभयोः परिघस्तु[21] सः[22] ॥ ११

मेघा यत्राभिवर्षन्ति स्कन्धावारंसमन्ततः[23] । सनायका[24] विद्रवते[25] सा चमूर्नात्र[26] संशयः ॥ १२

रूक्षा[27] वातं प्रकुर्वन्ति व्याधयो विष्टगन्धिनः[28] । कुशब्दश्च विवर्णश्च मेघो वर्षं न कुर्वते ॥ १३

सिंहाः[29] शृगाल-मार्जारा व्याघ्रा मेघा रवन्ति[30] ये[31] । महता मेघशब्देन[32] रुधिरं वर्षन्ति ते घनाः ॥ १४

पक्षिणश्चापि क्रव्यादा वा पश्यन्ति[33] समुत्थिताः । मेघास्तदाऽपि रुधिरं[34] *वर्षन्ते तत्र दर्शने ॥ १५

अनावृष्टिभयं घोरं दुर्भिक्षं मरणं[35] तथा । निवेदयन्ति ते मेघा †ये भवन्तीदृशा[36] दिवि[37] ॥ १६

तिथौ मुहूर्त्तकरणे[38] नक्षत्रे शकुने[39]ऽशुभे[40] । ‡सम्भवन्ति यदा मेघाः पापदास्ते भयङ्कराः ॥ १७

एवं लक्षणसंयुक्ताश्चमूं वर्षन्ति ये घनाः । चमूं सनायकां सर्वां ¶हन्तुमाख्यान्ति सर्वतः ॥ १८

रक्तं पांशुः सधूमं वा क्षौद्रं[41] केशा-ऽस्थि-शर्करा[42]ः । मेघा वर्षन्ति विषये यस्य राज्ञो हतस्तु सः ॥ १९

क्षारं वा कटुकं वाऽथ दुर्गन्धं[43] सस्यनाशनम्[44] । यस्मिन् देशेऽभिवर्षन्ति स[45] वै[46] देशो[47] विनश्यति[48] ॥ २०

प्रयातं पार्थिवं यत्र मेघश्चित्रं[49] प्रवर्षति[50] । वित्रस्तो[51] बध्यते[52] राजा विपरीतस्तदाऽपरे ॥ २१

सर्वत्रैव प्रयाणेन नृपो येनाभिषिच्यते । रुधिरादिविशेषेण[53] सर्वघाताय निर्दिशेत् ॥ २२

मेघाः सविद्युतश्चैव[54][55] सुगन्धाः सुस्वराश्च[56] ये । सुवेषाश्च[57] सुवाताश्च[58] सुधियाश्च[59] सुभिक्षदाः ॥ २३

अभ्राणां यानि रूपाणि सन्ध्यायामपि यानि च । मेघेषु[60] तानि सर्वाणि समास-व्यासतो विदुः ॥ २४

---

1 B C D यदि । 2 C लाक्षा° । 3 C विज्ञेयः । 4 C जया° । 5 C यदा । 6 C अभ्रं । 7 C पश्यति । 8 C दक्षिणः । 9 A B °नाथा; C °शब्दा । 10 A मुखराः, C सुस्विन्नाः । 11 C मधुरतोयाः । 12 C ज्ञेया । 13 C जलदा । 14 A सद्यो । 15 C मधुरान् । 16 C सुस्वरान् । 17 A श्रेष्ठिं; C सेवम् । 18 A गजमान; C नद्दमानेषु । 19 A दुर्जयः । 20 B सिद्धिम्; D शुद्धिः । 21-22 B परिसेनयोः । 23 A °धासारे । 24 C °काऽपि । 25 C द्रष्टव्यम् । 26 C चमूम् । 27 A रुक्षे । 28 C विविधानि वा । 29 A सिंघ° । 30 A द्रवन्ति । 31 A यत् । 32 A B D भीम° । 33 B पश्यन्ते; C वास्यन्ते; D वाश्यन्ते । 34 B रुचिर° । * C मांसं वा करकापि च ॥ B करकं मासमेव च ॥ D करकंमासमेव वा ॥ 35 A मरकं । † C ये दिप्तां दिशि निस्वनाः ॥ 36 B D भवन्तिदृशा । 37 A भुवि । 38 A D मुहूर्त्ते° । 39 C करणे । 40 A तथा; C शुभे । ‡ A अशुभे भवति ये मेघा । ¶ C पीडयंति निसंशयः । 41 B रौद्रं । 42 C °स्तु । 43 B दूरं । 44 A यस्या; B वा धन°; C not found. 45-47 A मेघा देशे । 48 C विनश्यंति सराजकः । 49 A यत्रास्य । 50 A वर्षति । 51 A वित्रास्य; B पित्रस्तो; D चित्रस्तो । 52 A वधेते; B वध्यते । 53 A B D नृपः सरुधिराज्यं च । 54 A B D सुविद्युता । 55 C सौम्याः । 56 C सुरभाः । 57 C अवेषाः । 58 C सुवेषाः । 59 B सुधीपार्श्वे; C श्वसनाः; D सुधायाः । 60 C असेवे ।

उल्कावत् साधनं ज्ञेयं[1] मेघेष्वपि तदा[2]ऽऽदिशेत् । अतः परं प्रवक्ष्यामि वातानामपि[3] लक्षणम् ॥ २५

**॥ इति नि(नै)र्ग्रन्थे भद्रबाहुके निमित्ते मेघकाण्डं नामाष्टमोऽध्यायः ॥**



अथातः संप्रवक्ष्यामि वातलक्षणमुत्तमम्[4] । प्रशस्तमप्रशस्तं च यथावदनुपूर्वशः[5] ॥ १
वर्षं भयं तथा क्षेमं राज्ञो जय-पराजयम् । मारुतः कुरुते लोके जन्तूनां पुण्य-पापजम्[6] ॥ २
*आदानाच्चैव पाताच्च पत(च)नाच्च विसर्जनात् । मारुतः सर्वगर्भाणां बलवान्नायकश्च[7] सः[8] ॥ ३
दक्षिणस्यां दिशि यदा वायुर्दक्षिणकाष्ठिकः । †समुद्रानुशयो[9] नाम स गर्भाणां तु संभवः ॥ ४
तेन संजनितं गर्भं वायुर्दक्षिण[10]काष्ठिकः । धारयेद् धारणे[11] मासे पाचयेत् पाचने तथा ॥ ५
धारितं पाचितं गर्भं वायुरुत्तरकाष्ठिकः । प्रमुञ्चति ततस्तोयं वर्षतमरुतोच्यते ॥ ६
आषाढी[12]पूर्णिमायां[13] तु पूर्ववातो यदा भवेत् । प्रया(वा)ति दिवसं सर्वं सुवृष्टिस्तु तदा[14] मता[15] ॥ ७
वाप्यानि सर्वबीजानि[16] जायन्ते निरुपद्रवम्[17] । शूद्राणामुपघाताय सोऽत्र लोके परत्र च ॥ ८
दिवसार्धं यदा वाति पूर्वमासौ[18] तु सोदकौ[19] । चतुर्भागेण मासस्तु शेषं[20] ज्ञेयं[21] यथाक्रमम् ॥ ९
पूर्वार्धदिवसे ज्ञेयौ[22] पूर्वमासौ[23] तु सोदकौ[24] । पश्चिमे पश्चिमौ मासौ ज्ञेयौ द्वावपि सोदकौ ॥ १०
‡हित्वा पूर्वं तु दिवसं मध्याह्ने यदि वाति[25] चेत्[26] । वायुर्मध्यममासात्तु[27] तदा मेघो[28] न वर्षति ॥ ११
आषाढीपूर्णिमायां तु दक्षिणो मारुतो यदा । न तदा वापयेत् किञ्चित् ब्रह्म-क्षत्रं च पीडयेत् ॥ १२
धन-धान्यं न[29] विक्रेयं[30] बलवन्तं च संश्रयेत् । दुर्भिक्षं मरणं[31] व्याधि§स्त्रासं मासं प्रवर्त्तते ॥ १३
आषाढीपूर्णिमायां तु पश्चिमो यदि मारुतः । मध्यमं वर्षणं सस्यं धान्यार्थं मध्यमं तथा ॥ १४
उद्विजंति[32] च[33] राजानो[34] वैराणि च[35] प्रकुर्वते[36] । परस्परोपघाताय[37] स्वराष्ट्र-परराष्ट्रयोः ॥ १५
आषाढीपूर्णिमायां तु वायुः स्यादुत्तरो यदा । वापयेत् सर्वबीजानि[38] सस्यं ज्येष्ठं समृद्ध्यति[39] ॥ १६
क्षेमं सुभिक्षमारोग्यं प्रशान्ताः[40] पार्थिवास्तथा । बहू[41]दकास्तदा मेघा मही[42] धर्मोत्सवाकुला[43] ॥ १७
आषाढीपूर्णिमायां तु वायुः स्यात् पूर्वदक्षिणः । राज्ञ[44]मृत्यु[45]र्विजानीयाच्चित्रं सस्यं तथा जलम् ॥ १८
क्वचिन्निष्प[द्य]ते सस्यं क्वचिच्चापि विपद्यते । धान्यार्थो मध्यमो ज्ञेयो तदा[46]ऽम्भश्च[47] भयं[48] नृणाम्[49] ॥ १९
आषाढीपूर्णिमायां तु वायुः स्याद् दक्षिणापरः । सस्यानामुपघाताय चौराणां तु विवृद्धये[50] ॥ २०
भस्म-पांशु-रज[51]स्कीर्णा तदा भवति मेदिनी । सर्वत्यागं तदा कृत्वा कर्तव्यो धान्यसङ्ग्रहः ॥ २१
विद्रवन्ति च राष्ट्राणि क्षीयन्ते नगराणि च । श्वेतास्थिर्मेदिनी ज्ञेया मांस-शोणित-कर्दमा ॥ २२

---

1 C सर्वं । 2 C समा° । 3 B D वात° । 4 C °संक्रमम् । 5 A °पूर्वतः । 6 A °पापजाम्; C पापयोः । * A B अवातं चैव वातं च पाचनश्च विसर्जनः; D In addition to this line, the line that is found in A and B is also found in this Ms. 7–8 C स्मृतः । † A धारायद्वारणे मे से । 9 B °तियसो । 10 C मध्यम° । 11 A वारणे । 12 C आषाढ° । 13 AB पूर्णिमासी; D पौर्णमासी । 14–15 B समासदा; C समास्तदा; D तमासदा । 16 B °जीवानि । 17 C निरुपद्रवाः । 18 A °मासे; C °मासं । 19 A C सोदकम् । 20 A शेषो; BD शेषौ । 21 A ज्ञेयो; B D ज्ञेयौ । 22 C ज्ञेयो । 23 C °मासो । 24 C सोदको । ‡ C पूर्वाण्हे प्रहरे यत्र पश्चिमेन च वाति चेत् । 25–26 A वा भवेत् । 27 C °मासौ । 28 B C D देवो । 29 A ते । 30 A विज्ञेयं । 31 C डामरं । § C तस्कराच्च महद्भयम् । 32 A B D उद्गच्छन्ते 33–34 A तथा राजा; B तथा राजौ; D यथा राजा । 35–36 C वहि कुर्वते; D प्रवर्तते । 37 A परस्परो यथा तोय । 38 A °जीवानि । 39 B प्रवर्द्धते; D प्रवर्त्तते । 40 A वसन्तो । 41 C वेहो° । 42 A D महा°; C सदा । 43 A D °कुलाः; C °वोद्यतः । 44–45 A राज्ञां सुखं । 46–48 C ज्ञे मध्यमं । 49 D भवेत् । 50 A सस्यदूयः । 51 C °रसा° ।

आषाढीपूर्णिमायां तु वायुः स्यादुत्तरापरः । मक्षिका[1] दंशमशका जायन्ते प्रबलास्तदा ॥ २३

मध्यमं क्वचिदुत्कृष्टं[2] वर्षं सस्यं च जायते । नूनं च मध्यमं किञ्चिद् धान्यार्थं तत्र[3] निर्दिशेत्[4] ॥ २४

आषाढीपूर्णिमायां तु वायुः पूर्वोत्तरो[5] यदा[6] । वापयेत् सर्वबीजानि *तदा चौरांश्च घातयेत् ॥ २५

स्थलेष्वपि च यद्बीजमुप्यते तत् समृद्ध्यति । क्षेमं चैव सुभिक्षं च भद्रबाहुवचो[7] यथा ॥ २६

बहूदका सस्यवती यज्ञोत्सवसमाकुला[8] । प्रशान्त[9]डिम्भ-डमरा[10] शुभा[11] भवति मेदिनी ॥ २७

पूर्वो[12] वातः[13] स्मृतः श्रेष्ठः तथा चाप्युत्तरो भवेत् । उत्तमस्तु[14] तथैशानो मध्यमस्त्वपरोत्तरः[15] ॥ २८

अपरस्तु तथा[16] न्यूनः[17] शिष्टो[18] वातः[19] प्रकीर्तितः । पापे[20] नक्षत्र-करणे मुहूर्त्ते च तथा भृशम् ॥ २९

पूर्ववातं यदा हन्यादुदीर्णो दक्षिणोऽनिलः[21] । न तत्र वापयेद् धान्यं कुर्यात् संचयमेव च ॥ ३०

दुर्भिक्षं चाप्यवृष्टिं च शस्त्रं रोगं जनक्षयम् । कुरुते सोऽनिलो घोरं आषाढाभ्यन्तरं परम् ॥ ३१

पापघाते तु[22] वातानां[23] श्रेष्ठं[24] सर्वत्र चादिशेत् । श्रेष्ठानपि[25] यदा हन्युः पापाः[26] पापं[27] तदाऽऽदिशेत् ॥ ३२

यदा वाताश्चत्वारो भृशं वान्त्यपसव्यतः[28] । अल्पोदं[29] सस्यसङ्घातं[30] भयं व्याधिं प्रकुर्वते ॥ ३३

प्रदक्षिणं यदा वांति त एव सुखशीतलाः । क्षेमं सुभिक्षमारोग्यं राज्यवृद्धिर्जयस्तथा ॥ ३४

समन्ततो यदा वान्ति परस्परविघातिनः[31] । शस्त्रं[32] जनक्षयं[33] रोगं सस्यघातं च कुर्वते ॥ ३५

एवं विज्ञाय वातानां[34] संयता[35] भैक्षवर्तिनः । प्रशस्तान्यत्र पश्यन्ति[36] वसेयुस्तत्र निश्चितम्[37] ॥ ३६

आहारस्थितयः सर्वे जङ्गमस्थावरास्तथा । जलसम्भवं[38] च सर्वं तस्यापि जननो[39]ऽ(कोऽ)निलः ॥ ३७

सर्वकालं प्रवक्ष्यामि वातानां लक्षणं[40] परम्[41] । आषाढीवत् तत् साध्यं यत् पूर्वं सम्प्रकीर्तितम् ॥ ३८

पूर्ववातो यदा तूर्णं सप्ताहं वाति कर्कशः । स्वस्थाने नाभिवर्षेत महदुत्पद्यते भयम् ॥ ३९

प्राकार-परिखानां वा ¶शस्त्राणां च समन्ततः । निवेदयति राष्ट्राणां विनाशं तादृशोऽनिलः ॥ ४०

सप्तरात्रं दिनार्धं[42] च यः कश्चिद् वाति मारुतः । महद्भयं च विज्ञेयं वर्षं वाऽथ[43] महद्[44] भवेत् ॥ ४१

पूर्वसन्ध्यां यदा वायु†रपसव्यं प्रवर्त्तते । पुरावरोधं कुरुते यायिनां[45] तु जयावहः ॥ ४२

पूर्वसन्ध्यां यदा वायुः संप्रवाति प्रदक्षिणः । नागराणां जयं[46] कुर्यात् सुभिक्षं यायि[47] विद्रवम्[48] ॥ ४३

मध्याह्ने चार्धरात्रे च तथा वाऽस्तमनोदये । वायुस्तूर्णं यदा वाति तदाऽवृष्टि[49]र्भयं रुजा ॥ ४४

यदा राज्ञः[50] प्रयातस्य प्रतिलोमोऽनिलो भवेत् । अपसव्यो समार्गस्थ[51](स्थ)स्तदा सेनावधं[52] विदुः ॥ ४५

अनुलोमो यदा स्निग्धः संप्रवाति प्रदक्षिणः । ‡नागराणां जयं कुर्यात्सुभिक्षं च प्रदीपयेत्[53] ॥ ४६

---

1 A °काण्डं । 2 A किञ्चि° । 3–4 C नात्र संशयः । 5–6 A स्यात् पूर्व-उत्तरः । * C चौराणां समुपद्रवम् ॥ 7 A °वदे । 8 A सैन्यो° । 9 C प्रशान्ता । 10 C These letters are missing in this Ms. 11 C सदा । 12–13 C पूर्वोत्तरः । 14 A B D उत्तरा । 15 A परोत्तरः; C परोत्तरा । 16 C ततो । 17 A नूनं; B D नूनः । 18–19 A सस्यवाता; C शिष्टपोया; D शिष्टा वाताः । 20 A वांपे । 21 A दक्षिणानलः; B दक्षिणोऽनलः । 22 A °घातेषु । 23 A नागानाम् । 24 A D श्रेष्ठः । 25 A श्रेष्ठात्तापि । 26–27 A पयोत्युपं । 28 A अपसर्वतः; C यसमन्ततः । 29 A B D °पोदकं । 30 A B D पयघातं । 31 A परिविधानिलः । 32 A सस्वं । 33 C °भयं । 34 C वातांस्तु । 35 C संघयता । 36 C विज्ञाय । 37 C निश्चिताः । 38 B °सम्भ्रमं । 39 C जलदो । 40–41 A B D लक्षणान्वितम् । ¶ C शस्त्रकोपभयं ततः । 42 A दिवा वार्द्धं; B दिवा चार्द्धं; D दिवा सार्द्धं । 43 A B D वातो । 44 A B D महान् । † A रपरसन्ध्या द्रवात् पुरः; B पर सन्ध्या द्रवात् परम्; D परसन्ध्या प्रवास्यते । 45 B जायिनां; A वापिना° । 46 D भयं । 47 A B D चापि । 48 A विद्रवास् । 49 B C D वृष्टि° । 50 A राज्ञां; C राज्ञं । 51 A B D समार्गस्थ; C विमार्गस्थो । 52 A °भयं । ‡ C प्रदीसश्चार्त्तशब्दश्च तदा क्षिप्रं जयावहः ॥ 53 A D प्रदीपसन् ।

*अनुलोमाश्च शब्दश्च तदा क्षिप्रं जयावहः । दशाहं द्वादशाहं वा पापवातो यदा भवेत् ॥ ४७
अनुबन्धं तदा विन्द्याद् राजमृत्युं जनक्षयम् । †यदाऽभ्रवर्जितो वाति वायुस्तूर्णमकालजः ॥ ४८
पांशु-भस्मसमाकीर्णः सस्यघाती भयावहः । सविद्युत्सरजो वायुरूर्ध्वगो वायुभिः सह ॥ ४९
प्रवाति[1] पक्षि[2]शब्देन क्रूरेण स भयावहः । प्रवान्ति सर्वतो वाता यदा तूर्णं मुहुर्मुहुः ॥ ५०
यतो यतोऽभिगच्छन्ति तत्र देशं निहन्ति ते । अनुलोमो यदाऽनीके सुगन्धो वाति मारुतः ॥ ५१
‡आयातश्च ततो राजा जयमाप्नोति सर्वतः । प्रतिलोमो यदाऽनीके दुर्गन्धो वाति मारुतः ॥ ५२
¶तदा यत्नेन साध्यन्ते वीरकीर्तिसुलब्धयः । यदा सपरिघा सन्ध्या पूर्वो वात्यनिलो भृशम् ॥ ५३
पूर्वस्मिन्नेव दिग्भागे पश्चिमा वध्यते चमूः । यदा सपरिघा सन्ध्या पश्चिमो वाति मारुतः ॥ ५४
§अपरस्मिन् दिशो भागे पूर्वा[3] वध्येत[4] सा[5] चमूः । प्रशस्तस्तु यदा वातः ‖प्रतिलोमोऽनुपद्रवः ॥ ५७
तदा यान्प्रार्थयेत् कामाँ[6]स्तान् प्राप्नोति[7] नराधिपः । अप्रशस्तो यदा वायु**र्नाभिपश्यत्युपद्रवम् ॥ ५८
प्रयातस्य नरेन्द्रस्य चमूर्हारयते[8] तदा[9] । तिथीनां करणानां च मुहूर्त्तानां च ज्योतिषाम् ॥ ५९
मारुतो वलवान् नेता तस्माद् यत्रैव मारुतः । वायमानेऽनिले पूर्वे[10] मेघांस्तत्र समादिशेत् ॥ ६०
उत्तरे वायमाने तु $जलं तत्र समादिशेत् । ईशाने वर्षणं[11] ज्ञेय[12]माग्नेये नैर्ऋतेऽपि च ॥ ६१
याम्ये च सङ्ग्रहं[13] ब्रूयाद् भद्रवाहुवचो यथा । सुगन्धेषु प्रशान्तेषु स्निग्धेषु मार्दवेषु च ।
वायमानेषु वातेषु सुभिक्षं क्षेममेव च ॥ ६२
महतोऽपि समुद्भूतः सतडित् साभिगर्जितः[14] । मेघा[15]न्निहनते[16] वायुर्नैर्ऋतो[17] दक्षिणाग्निजः ॥ ६३
सर्वलक्षणसंपूर्णा मेघा मुख्या जलावहाः । मुहूर्त्तादुत्थितो वायुर्हन्यात् सर्वोऽपि नैर्ऋतः[18] ॥ ६४
सर्वथा वलवान् वायुः स्वचक्रे[19] निरभिग्रहः[20] । करणादिभिः संयुक्तो विशेषेण शुभा-ऽशुभः ॥ ६५

॥ इति नि(नै)र्ग्रन्थे भद्रबाहुके नैमित्ते वातलक्षणं नाम नवमोऽध्यायः ॥

---

* The stanzas from now upto 59 are wrongly numbered as will be seen from the context. This first half should be dropped and the second half of the stanza and the first half of the succeeding stanza should form one whole st. † A B D यदापि गर्जितो वाति । 1–2 B प्रतिपक्षशब्देन । ‡ This line and the following line are not found in C. In B it is thus found:—अपं ततः ततो धर्मामाप्नोति सर्वतः ॥ ¶ This line is thus found in C:— तदा यत्नेन वध्यन्ते धरातलेषु कीर्त्तयः । § It is clear from the numbering of the stanzas that two sts. are missing in A. They are also not found in C but they are found as follows in B and D and form a regular part of the text as will be seen:—यदा सपरिखा सन्ध्या दक्षिणो वाति मारुतः...etc ॥ and यदा सपरिखा सन्ध्या उत्तरो वाति मारुतः...etc. etc. ॥ Thus there should be such stanzas to make the sense complete. 3–5 A दक्षिणा बध्यते । ‖ A B D अभिपश्यन्त्युपद्रवम् ॥ 6 A क्षामाँ । 7 A मासे भि; C लसेत्तु । ** C प्रतिलोमो विसद्रवः ॥ 8 C नानयते । 9 C तुराः । 10 A D पूर्वे; C पूर्णो । $ A B D तृतीयायामनिले विदुः । 11 A B D वर्षे । 12 A B D विज्ञेयं । 13 A B D चापग्रहं । 14 C सह गर्जितान् । 15 A वामेव । 16 C विनाशयेत् । 17 C निक्रांतो । 18 A नैरिवः; B मारुतः । 19–20 A B D सुतर्कनिरवग्रहः ।

अथातः संप्रवक्ष्यामि प्रवर्षणं[1] निबोधत । प्रशस्तमप्रशस्तं च यथावद[2]नुपूर्वशः[3] ॥ १

ज्येष्ठे[4] मूलमतिक्रम्य पतन्ति[5] बिन्दवो[6] यदा[7] । प्रवर्षणं तदा ज्ञेयं शुभं वा यदि वाऽशुभम् ॥ २

आषाढे[8] शुक्ल[9]पूर्वासु[10] ग्रीष्मे[11] मासे तु पश्चिमे । दे[12]वप्रतिपदायां[13] तु[14] यदा[15] कुर्यात् प्रवर्षणम् ॥ ३

चतुःषष्टिमाढकानि[16] तदा[17] वर्षति[18] वासवः[19] । निष्पद्यन्ते च सस्यानि सर्वाणि निरुपद्रवम् ॥ ४

धर्म-कामार्था[20] वर्तन्ते[21] परचक्रं प्रणश्यति[22] । क्षेमं[23] सुभिक्ष[24]मारोग्यं दशरात्रं[25] त्वपग्रहम्[26] ॥ ५

उत्तरा[27]भ्यामाषाढाभ्यां[28] यदा देवः[29] प्रवर्षति[30] । विज्ञेया[31] द्वादशा द्रोणा[32] ततो वर्षं सुभिक्षदम्[33] ॥ ६

तदा निम्नानि वातानि[34] मध्यमं वर्षणं भवेत् । सस्यानां चापि निष्पत्तिः सुभिक्षं क्षेममेव च ॥ ७

श्रवणेन[35] वारि[36] विज्ञेयं[37] श्रेष्ठं सस्यं च निर्दिशेत् । चौराश्च प्रबला[38] ज्ञेया व्याधयोऽत्र पृथग्विधाः ॥ ८

क्षेत्रा[39]न्य(ण्य)त्र न रोहन्ति दष्टानां[40] नास्ति जीवितम् । अष्टादशाहं जानीयादपग्रहं[41] न संशयः ॥ ९

आढकानि धनिष्ठायां[42] सप्तपञ्च[43] समादिशेत्[44] । मही[45] सस्यवती[46] ज्ञेया[47] वाणिज्यं च विनश्यति ॥ १०

क्षेमं सुभिक्षमारोग्यं सप्तरात्र[48]मपग्रहः[49] । प्रबला दंष्ट्रिणो ज्ञेया मूषकाः शलभाः[50] शुकाः[51] ॥ ११

खारी[52]स्तु वारिणो[53] विन्द्यात्[54] सस्यानां चाप्युपद्रवम्[55] । चौरास्तु प्रबला ज्ञेया न च कश्चिदपग्रहः[56] ॥ १२

पूर्वा[57]भाद्रपदायां[58] तु यदा मेघः[59] प्रवर्षति । चतुःषष्टिमाढकानि तदा[60] वर्षति सर्वशः[61] ॥ १३

सर्वधान्यानि जायन्ते बलवन्तश्च तस्कराः । नाणकं[62] क्षुभ्यते[63] चापि दशरात्रमपग्रहः[64] ॥ १४

नवति[65]राढकानि स्युरुत्तरायां समादिशेत् । स्थलेषु वापयेद्[66] बीजं सर्वसस्यं[67] समृद्ध्यति[68] ॥ १५

क्षेमं सुभिक्षमारोग्यं विंशद्रात्र[69]मपग्रहः । दिवसानां विजानीयाद् भद्रबाहुवचो यथा ॥ १६

चतुःषष्टि[70]माढका[71]नीह रेवत्यामभि[72]निर्दिशेत् । सस्यानि च समृद्ध्यन्ते सर्वाण्येव यथाक्रमम् ॥ १७

उत्पद्यन्ते[73] च राजानः परस्परविरोधिनः[74] । यानयुग्यानि[75] शोभन्ते बलवद्[76]राष्ट्र[77]बन्धनम्[78] ॥ १८

एकोनानि[79] तु पञ्चाशदाढकानि समादिशेत् । अश्विन्यां कुरुते यत्र प्रवर्षण[80]मसंशयः[81] ॥ १९

भवेत्[82](?)मुभये[83] सस्यं[84] पीड्यन्ते यवनाः शकाः । गान्धारिकाश्च काम्बोजाः[85] पाञ्चालाश्च चतुष्पदाः ॥ २०

---

1 A D प्रवर्षन्तं; B मेघवर्षं । 2 A यदा तद° । 3 A B °पूर्वसः । 4 A D ज्येष्ठो । 5 B C D पतंते । 6 A ते बिन्दवो । 7 A B D यथा । 8 A C आषाढ–। 9 C–मत्र । 10 C पूर्वा च । 11 D ग्रीष्म° । 12 C D देवः । 13–14 C प्रतिपादनेह । 15 A यद; D तदा । 16 C °आढकानि; D °राढकानि । 17 C स्युस्तदा । 18 A वर्षन्ति । 19 B माधवः । 20 A °कामार्थं°; B °कामार्थं; C धर्मार्थकाम । 21 A D प्रवर्तन्ते । 22 C प्रशाम्यति । 23 B D सुभिक्षं । 24 B D क्षेमं । 25 C दशराजा । 26 A त्वथ; C त्वद° । 27 B उत्तराए; C उत्तरां । 28 B सषाढाभ्यां । 29 C देव । 30 C प्रवर्षं । 31 C विज्ञेयं । 32 B द्रोणां; C द्रोणं । 33 A सुभिक्षकम् । 34 B वाप्यानि । 35 A श्रमणेन । 36 A B D खारि । 37 A B D विज्ञेया । 38 B प्रलया । 39 A C D क्षतानि । 40 B न दर्प्पं; C नष्टानां । 41 C अवग्रह । 42 C धनिष्ठानि । 43 A सप्तपञ्च; C सप्तपञ्चाशतं । 44 C वदेत् । 45 A महा; C महीं । 46 C °वंती; D °वता । 47 C विंद्यात् । 48 C °रात्राणि । 49 A उपग्रहः । 50 B C सुलभाः; D शुलभा° । 51 A शूकाः; B D शुभाः । 52 A D खारिं; B खारि । 53 A B वारुणो; D वारुणे । 54 A B D ज्ञेया । 55 A °प्ययपद्रवम् । 56 A उपग्रहः । 57 A पूर्वं° । 58 A °सद्रपदायां । 59 B C D देवः । 60 A B स्युस्तदा । 61 A माधवः । 62 A नायिक; B नायकं । 63 A जन्याते । 64 A °मुपग्रहः । 65 A B D नवतिम् । 66 A चापि तं । 67 C सर्वसुखं । 68 A च जायते; C प्ररोहति । 69 A B D विंशरात्रम् । 70 B चतुःषष्ठा°; C D चतुःषष्टिः । 71 A C D आढकानि । 72 A B °मपि । 73 C D उद्वेजन्ते । 74 A °विरोधकृत्; C °विनाशिनः । 75 A B D यानि मुख्यानि । 76 A बलवं । 77 A B दंष्ट्रि° । 78 C °वर्धनम् । 79 C एकान्यूनानि । 80 D णं न सं° । 81 C मथापि वा । 82 B भवेत्र; C भयेतत् । 83 C भवयो । 84 C वापि । 85 A सङ्कोचो; B C D शकाम्बोजाः ।

एकोना[1]विंशतिर्विन्द्यादाढकानि न संशयः । भरण्यां वासवश्चैव यदा कुर्यात् प्रवर्षणम् ॥ २१

व्याला[2]ः सरीसृपाश्चैवं[3] *मरणं व्याधयो[4] रुजः[5] । सस्यं कनिष्ठकं ज्ञेयं प्रजाः सर्वाश्च दुःखिताः ॥ २२

आढकान्येकपञ्चाशत् कृत्तिकासु समादिशेत् । तदात्वपग्रहो ज्ञेयः सप्तविंशतिरात्रकः ॥ २३

द्वि[6]मासिक[7]स्तदा मेघ[8]श्चित्रं सस्यमुपद्रवम् । निम्नेषु वापयेद् बीजं भ[9]यमन्येर्विनिर्दिशेत् ॥ २४

†आढकान्येकनवतिं ‡रोहिण्यामभिनिर्दिशेत्[10] । अपग्रहं विजानीयात् सर्वमेकादशाहिकाम् ॥ २५

क्षेमं सुभिक्षमारोग्यं नैर्ऋतीयं बहूदकम् । स्थलेषु वापयेद् बीजं राज्ञो[11] विजय[12]मादिशेत् ॥ २६

§आढकान्येकनवतिं सौम्यर्क्षे वर्षते यदा । ¶तदाऽप्यपग्रहं विन्द्याद्वासराणि[13] चतुर्दश[14] ॥ २७

महामात्या[15]श्च पीड्यन्ते $बहुव्याधिं विनिर्दिशेत् । ||सुभिक्षं चैव विज्ञेयं दंष्ट्रिणः प्रबलास्तथा ॥ २८

आढकानि तु द्वात्रिं[16]शदार्द्रायामभिनिर्दिशेत् । दुर्भिक्षं[17] व्याधि[18]मरणं सस्यघातमुपद्रवम् ॥ २९

श्रावणे प्रथमे मासे **वर्षित्वा न च वर्षति । प्रोष्ठपदं च वर्षित्वा शेषकालं न वर्षति ॥ ३०

आढकान्येक[न]वतिं विन्द्याच्चैव पुनर्वसोः । सस्यं निष्पद्यते क्षिप्रं व्याधिश्च बलवान् विदुः ॥ ३१

चत्वारिंशच्च द्वे वाऽपि जानीयादाढकान्यथ । पुष्येण मन्दवृष्टिश्च निम्ने बीजानि वापयेत् ॥ ३२

पक्षमश्वयुजे मासे पक्षं प्रोष्ठपदे तथा । अपग्रहं विजानीयाद् बहुलेऽपि प्रवर्षणम् ॥ ३३

††सस्यघातं विजानीयाद् व्याधिभिश्चोदकेन च । साधवो दुःखिता विन्द्यात्प्रोष्ठपदमपग्रहः ॥ ३४

मघासु खारी विज्ञेया सस्यानां च समुद्भवम् । कुक्षिव्याधिश्च बलवाननीतिश्च तु जायते ॥ ३५

फाल्गुनीषु च पूर्वासु यदा देवः[19] प्रवर्षति । खारी तदाऽऽदिशेत् पूर्णां तदा ‡‡स्त्रीणां च तत्सुखम् ॥ ३६

सस्यानि फलवन्ति स्युर्वाणिज्यानि[20] दिशन्ति[21] च । अपग्रहश्चतुस्त्रिं[22]शच्छ्रावणे सप्तरात्रिकः ॥ ३७

उत्तरायां तु फाल्गुन्यां षष्टिसप्त च निर्दिशेत् । आढकानि सुभिक्षं च क्षेममारोग्यमेव च ॥ ३८

दानशीलाश्च मनुजा(मानवा) धर्मशीलाश्च साधवः । अप[ग्र]हं विजानीयात् कार्तिके द्वादशाहिकम् ॥ ३९

पञ्चाशीतिं विजानीयाद् हस्ते प्रवर्षणं यदा । तदा निम्नानि वाप्यानि पञ्चवर्ण[23] च[24] जायते[25] ॥ ४०

सङ्ग्रामाश्चात्र वर्धन्ते शिल्पिकानां सुखोत्तमम् । श्रावणा-ऽश्वयुजौ मासौ[26] तथा कार्त्तिकमेव च ॥ ४१

अपग्रहं विजानीयान्मासे मासे दशाहिक[27]म् । चौराश्च बलवन्तश्च उत्पद्यन्ते च पार्थिवाः ॥ ४२

द्वात्रिं(विं)[28]शमाढकानि स्युश्चित्रायां वर्षणं यदा । चित्रं विन्द्यात् तदा सस्यं चित्रं वर्षं विनिर्दिशेत् ॥ ४३

निम्नेषु[29] वापयेद् बीजं स्थलेषु परिवर्जयेत् । मध्यमं[30] तं[31] विजानीयाद्[32] भद्रबाहुवचो यथा ॥ ४४

द्वात्रिंशदाढकानि स्युः स्वातौ प्रवर्षणं यदा । वायुवृष्टि[33]रनावृष्टि[34]र्मा[35]सम[35]सेकं च वर्षति ॥ ४५

---

1 A एकोना; C एकाऽयूना । 2 A B D तदा व्यालाः । 3 A B D it is not found in these Mss. * A मृत्युव्याधितो विविधैः रुजेः । 4 C व्याधि । 5 C घोरयः । 6 A B D द्वौ । 7 A D मासकः । 8 C देवः । 9 C जय । † C The first quarter is missing in this Ms. ‡ B The three following quarters are not found in this Ms. 10 A B D मपि । 11 C राज्ञश्च । 12 C भयम् । § D This st. is not found in this Ms. ¶ B तदा प्रवर्षणं विंद्यात् 13 A सप्त । 14 A मेकादशाहिका । 15 A महामात्रा; B महामन्त्रा; C महामंत्रा । $ A B D चतुर्व्याधिश्च जायंते । || A B D क्षेमं सुभिक्षमारोग्यं । 16 A द्वाविंश । 17 C D सुभिक्षम् । 18 C क्षेम । ** C वर्षेच्चेव पुनः पुनः । †† This stanza is preceded by the following stanza in B C D:—चतुःषष्टिमाढकानि त्वदा वर्षति वासवः । यथाऽऽश्लेषासु प्रथमं कुरुते च प्रवर्षणम् ॥ 19 A मेघः । ‡‡ A स्त्री चलतु सुखम् । 20 A वणयो । 21 A निर्विशन्ति । 22 C चतुर्विंशत् । 23 A पञ्चवर्णे । 24–25 A विज्ञायते । 26 A B D वातः । 27 A दसाधिकाम् । 28 B द्वात्रिंशम् । 29 C सिश्रेषु । 30–31 C मध्यमानां समा । 32 C विंद्यात् । 33 A °रश्मिः; C °मश्मिम् । 34 A अन्यवृष्टिः । 35 A B वर्षम् ।

विशाखासु विजानीयात् खारिरेव न संशयः । सस्यं संपद्यते सर्वं वाणिज्यं पीड्यते न हि ॥ ४६
अपग्रहं तु जानीयाद् दशाहं प्रौष्ठपादिकम् । क्षेमं सुभिक्षमारोग्यं *तां समां नाऽत्र संशयः ॥ ४७
†जानीयादनुराधायां खारिं प्रवर्षणं यदा । क्षेमं सुभिक्षमारोग्यं परचक्रं प्रशाम्यति ॥ ४८
दूरं[1] प्रवासिका यान्ति धर्मशीलाश्च मानवाः । मैत्री च स्थावरा ज्ञेया शाम्यन्ते[2] चेतयस्तदा[3] ॥ ४९
ज्येष्ठायामाढकानि स्युश्चतुःषष्टिं विनिर्दिशेत् । स्थलेषु वापयेद् बीजं तदा भूदाह[4]विद्रवः ॥ ५०
मूले खारी विजानीयात् सस्यं सर्वं समृद्ध्यति । एकं[5]मूलानि पीड्यन्ते ‡चौराश्च प्रबलाश्च ये ॥ ५१
एतद् व्यासेन कथितं समासेन[6] पुनः[7] शृणु[8] । §भद्रबाहुवचः श्रुत्वा मतिमानवधारयेत् ॥ ५२
द्वात्रिंशदा[9]ढकानि स्युः नक्रमासेषु[10](?) निर्दिशेत्[11] । समक्षेत्रे[12] द्विगुणितं तत् त्रिगुणं[13] बाधितेषु[14] च ॥ ५३
उल्कावत् साधनं चात्र ¶वर्षणं च विनिर्दिशेत् । शुभाऽशुभं ततो वाच्यं सम्यग् ज्ञात्वा यथाक्रमम् ॥ ५४

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते वर्षाध्यायो दशमः ॥

अथातः संप्रवक्ष्यामि गन्धर्वनगरं तथा । शुभा-ऽशुभं[15] तु[16] भूतानां नैर्ग्रन्थे निपुणे[17] यथा[18] ॥ १
पूर्वसूरे यदा घोरं[19] गन्धर्वनगरं भवेत् । नागराणां वधं विन्द्यात् तदा[20] घोरमसंशयम् ॥ २
**अस्तं याते यथाऽऽदित्ये गन्धर्वनगरं भवेत् । यायिनां च तदा विन्द्याद् वधं घोरमु[21]पस्थितम् ॥ ३
रक्तं गन्धर्वनगरं दिशं[22] दीप्तां यदा भृशम् । शस्त्रोत्पातं[23] तदा विन्द्याद् दारुणं समुपस्थितम् ॥ ४
पीतं गन्धर्वनगरं दिशं[24] याम्यां[25] यदा[26] भृशम्[27] । ††व्याधिं तदा विजानीयात् प्राणिनां मृत्युसन्निभम् ॥ ५
कृष्णं गन्धर्वनगरमपरस्यां[28] स्मृतं[29] दिशि । वधं[30] तदा विजानीयाद् भयं वा शूद्रयोनिजम् ॥ ६
श्वेतं गन्धर्वनगरं दिशं सौम्यां यदा भृशम् । राज्ञो विजयमाख्याति नगरस्य[31] धनान्वितम्[32] ॥ ७
सर्वास्वपि यदा दिक्षु गन्धर्वनगरं भवेत् । सर्वे वर्णा विरुध्यन्ते सर्वदिक्षु परस्परम् ॥ ८
कपिलं सस्यघाताय माञ्जिष्ठं हरिणं(तं)[33] तथा[34] । अव्यक्तवर्णं कुरुते बलक्षोभं समन्ततः[35] ॥ ९
गन्धर्वनगरं स्निग्धं सप्राकारं सतोरणम् । शान्तदिशि समाश्रित्य राज्ञस्तद् विजयङ्करम् ॥ १०
गन्धर्वनगरं(रे) व्योम्नि[36] परुषं[37] यदि दृश्यते । वाता[38]शनिनिपातांस्तु[39] तत् करोति सुदारुणम्(णान्) ॥ ११
इन्द्रा[40]ऽऽयुधसवर्णं[41] च धूमा[42]ग्निसदृशं च यत् । तदाग्निभयमाख्याति गन्धर्वनगरं नृणाम् ॥ १२
खण्डं विशीर्णं[43] छिद्रं[44] वा[45] गन्धर्वनगरं यदा । तदा तस्करसङ्घाना[46]म् स भयो[47] जायते भुवि ॥ १३

---

* C परचक्रं प्रशाम्यति ॥ † C This st. is missing in this Ms. 1 A B D दूरा । 2 A साध्यन्ते; C शस्यते । 3 C च भयं । 4 C उदक° । 5 C रक्तानि । ‡ A B D तदा चौराः प्रवर्द्धते । 6 A B D समासः । 7 A B D श्रूयतां । 8 A B D पुनः । § A मतिमानुपगृतह्णीत भद्रबाहुप्रवर्षणम्; B D मतिमानुपधारेत भद्रबाहुप्रवर्षणम् ॥ 9 A B D °त्रिंशमा° । 10 C नक्तं भावेषु; D नक्तक्षेषु । 11 D विनिर्दिशेत् । 12 A B D समक्षेत्रेषु । 13 A B D त्रिगुणं । 14 A B D वाहिकेषु । ¶ C निर्दिशेत ज्ञानकोविदः । 15-16 A B D °शुभार्थं° । 17-18 A C संप्रभाषितम्' । 19 A चौरं । 20 C वधं । 21 C उपस्थितम् । ** C This is missing in this Ms. 22 B निसं । 23 A B °आघातं । 24 C दिशि । 25 A D दीसं; B पीत° । 26 C समाश्रितं । 27 A दिशाम्; B भवेत् । †† C the same latter half is found in this Ms as in st. 4. 28 C अपरां । 29 A B मृतं; C संवृतं । 30 ABD वर्षं । 31 C नगरं । 32 C बंधनान्वितम् । 33-34 C हारयेद्वयं । 35 C असंशयः । 36 C पांडु । 37 C पुरुषं । 38 A वाता च । 39 A सन्निपातांस्तु । 40 C चंद्र° । 41 A B D °सुवर्णं । 42 B धूम्र° । 43 C विकीर्णं°; D विशीर्णम् । 44 B °वर्णं; D सच्छिद्रं । 45 A D it is not found. B च । 46 A °सन्धानम्; C °संवातम् । 47 A C अनयोः ।

यदा गन्धर्वनगरं सप्राकारं सतोरणम् । *दृश्यते तस्करान्[1] हन्ति तदा यवांत[2](यान् वन)वासिनः ॥ १४
†विशेष्यतापसव्यं तु गन्धर्वनगरं यदा । परचक्रेण महता नगरं परिवार्यते[3] ॥ १५
गन्धर्वनगरं क्षिप्रं दक्षिणे जायते यदा । स्वपक्षागमनं चैव जयं वृद्धिं[4] जलं वहेत् ॥ १६
यदा गन्धर्वनगरं प्रकटं[5] तु[6] दवाग्निवत् । दृश्यते पुररोधाय[7] तद्भवेन्नात्र[8] संशयः ॥ १७
अपसव्यं विशीर्णं[9] तु[10] गन्धर्वनगरं यदा । तदा विलुप्यते राष्ट्रं बलक्षोभश्च जायते ॥ १८
यदा गन्धर्वनगरं प्रविशेत्[11]ऽभिदक्षिणम् । अपूर्वां लभते राजा तदा स्फीतां वसुन्धराम् ॥ १९
सध्वजं सपताकं वा सुस्निग्धं सु[प्र]तिष्ठितम् । शान्तां[12] दिशं प्रपद्येत राजवृद्धिं तदाऽऽदिशेत् ॥ २०
यदा शुभै[13]र्धनैर्मिश्रं सविद्युत् सबलाहकम् । गन्धर्वनगरं स्निग्धं[14] विन्द्या[15]दुदकसंप्लवम् ॥ २१
सध्वजं सपताकं वा गन्धर्वनगरं यदा । दीप्तां दिशं समाश्रित्य नियतं राजमृत्युदम्[16] ॥ २२
विदिक्षु[17] चैवं[18] सर्वासु[19] गन्धर्वनगरं यदा । ‡संकरः सर्ववर्णानां तदा भवति दारुणः ॥ २३
द्विवर्णं वा त्रिवर्णं वा गन्धर्वनगरं यदा । चातुर्वर्ण्यमयं भेदं तदात्रापि विनिर्दिशेत् ॥ २४
अनेकवर्णसंस्थानं गन्धर्वनगरं भवेत् । क्षुभ्यन्ते[20] तत्र राष्ट्राणि ग्रामाश्च[21] नगराणि च ॥ २५
सङ्ग्रामाश्चानुवर्तन्ते मांस-शोणितकर्दमाः । एतस्मिंल्लक्षणो-त्पाते भद्रबाहुवचो यथा ॥ २६
§रक्तं गन्धर्वनगरं क्षत्रियाणां भयावहम् । पीतं वैश्यान्[22] निहन्त्याशु कृष्णं शूद्रान् सितं द्विजान् ॥ २७
अरण्यानि तु सर्वाणि गन्धर्वनगरं यदा । आरण्यं जायते राष्ट्रं अचिरान्नात्र[23] संशयः ॥ २८
अम्बरेषू[24]दकं विद्याद् भयं प्रहरणेषु[25] च । अग्निजेषू[26]पकरणेषु भयमग्नेः समादिशेत् ॥ २९
शुभा-ऽशुभं विजानीयाच्चातुर्वर्ण्यं यथाक्रमम् । ¶दिक्षु सर्वासु[27] नियतं भद्रबाहुवचो यथा ॥ ३०
उल्कावत् साधनं दिक्षु जानीयात् पूर्वकीर्तितम् । सर्वगन्धर्वनगरं यथावदनुपूर्वशः ॥ ३१

**॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते गन्धर्वनगरं नाम एकादशोऽध्यायः ॥**

---

अथातः संप्रवक्ष्यामि गर्भान् सर्वान् सुखावहान् । भिक्षुकानां[28] विशेषेण परदत्तोपजीविनाम् ॥ १
ज्येष्ठा-मूलममावास्यां मार्गशीर्षं प्रपद्यते[29] । मार्गशीर्षप्रतिपदि गर्भाधानं प्रवर्तते ॥ २
दिवा[30] समुत्थितो[31] गर्भो रात्रौ विसृजते जलम् । ‖रात्रौ समुत्थितश्चापि दिवा विसृजते जलम् ॥ ३
सप्तमे सप्तमे मासे सप्तमे सप्तमेऽहनि । गर्भाः[32] पाके[33]ऽभिगच्छन्ति[34] यादृशं तादृशं फलम् ॥ ४

---

* In C the following latter half is found:— तदाश्वपक्षगमनं जयं वृद्धिं बलं वदेत् ॥
1 A तस्करो । 2 A ये वत्त° । † C The followinng two sts. are not found in C. 3 B परिवर्ज्जयेत् । 4 A तुष्टिं । 5–6 C पांशुधूम°; D सुप्रकरं । 7 C पुरतो वायु । 8 C तद्भयो । 9 A तु सीर्यं । 10 C विसीर्येत । 11 A D निवेश्यतेऽभि°; B निवेक्षते । 12 A साध्यं; B तेषां; D तां । 13 A these two letters are missing. 14 C विंद्यात् । 15 C दृश्यते । 16 A छत्रभङ्गदम्; C राजा विनश्यति । 17 A तद्दिक्षु । 18 C वसु । 19 C पर्वासु । ‡ C The second half of this st. and the first half of the following st. are missing in this Ms. So the second half of st. 24 becomes the second half of st. 23. 20 A क्षुध्यन्ते । 21 A C °श्च° । § D The following four sts. are not found in this Ms. 22 A शूद्रान् । 23 C नियमेन न । 24 A अन्तरेषु; B अवरेषु । 25 B प्रकरणेषु । 26 A °ज्येष्ठ°; C °तेजो° । ¶ C This second half is not found in this Ms. 27 B समंसु । 28 A भिक्षाचराणां । 29 C प्रवर्त्तते । 30 A दिवसो । 31 A सुस्थितो । ‖ C This second half is not found in C so that the first half of every succeeding st. becomes the second half of the preceding st. in C. 32 A गर्भो । 33 A not found here; C फलं । 34 C प्रयच्छन्ति ।

पूर्वसन्ध्यासमुत्पन्नः पश्चिमायां प्रयच्छति । पश्चिमायां समुत्पन्नः पूर्वायां च प्रयच्छति ॥ ५
नक्षत्राणि मुहूर्त्तांश्च सर्वमेवं समादिशेत् । षण्मासान् समतिक्रम्य ततो देवः प्रवर्षति ॥ ६
गर्भाधानादि ये मासास्ते च मासा अवधारिणः । विपाचनत्रयश्चापि त्रयः कालाभिवर्षणाः ॥ ७
शीतवातश्च विद्युच्च गर्जनं परिवेषणम् । सर्वगर्भेषु शस्यंते[2] *निर्ग्रन्थाः साधुदर्शिनः ॥ ८
गर्भास्तु विविधा ज्ञेयाः †शुभा-ऽशुभा यदा तदा । पापलिङ्गा निरुदका भयं दद्युरसंशयः ॥ ९
उल्कापाता दिशां दाहा निर्घाताः पांशुवृष्टयः । गृहयुद्धं निवृत्तिश्च ग्रहणं चन्द्र-सूर्ययोः ॥ १०
ग्रहाणां चरितं चक्रं साधूनां[3] कोपसंभवम् । गर्भाणामुपघाताय न ते ग्राह्या विपश्चितैः ॥ ११
धूमं रजः पिशाचांश्च शस्त्रमुल्कां सनागजैः[4] । तैलं घृतं सुरामस्थि क्षारं[5] लाक्षां वसां[6] मधु ॥ १२
अङ्गारकान्[7] नखान् केशान् मांस-शोणित-कर्दमान् । विपच्यमाना मुञ्चन्ति गर्भाः पापभयावहाः ॥ १३
कार्तिकं वाऽथ पौषं च चैत्र-वैशाखमेव च । श्रावणं चाश्विनं सौम्यं गर्भं विन्द्याद् बहूदकम् ॥ १४
ये तु पुष्येण[8] दृश्यन्ते हस्तेनाभिजिता[9] तथा । अश्विन्यां संभवन्तश्च ते पश्चान्नैव शोभनाः ॥ १५
आर्द्राऽऽश्लेषासु ज्येष्ठासु मूले वा संभवन्ति ये । गर्भागमनदक्षाश्च[10] तेऽपि तांश्च[11] वरोदकाः[12] ॥ १६
‡उत्थितं चापि वैशाखं स्रवन्तं कार्तिकं जलम् । हिमागमेन गमिका मन्दोदास्ते प्रकीर्तिताः ॥ १७
स्वातौ च मैत्रदेवे च वैष्णवे च सुवारुणे[13] । गर्भास्तु धारणा ज्ञेया संभवन्तो बहूदकाः ॥ १८
पूर्वामुदीची(चि)मैशानीं ये गर्भा दिशमाश्रिताः । ¶ते सस्यवन्तस्तोयाद्यास्ते गर्भास्तु सुपूजिताः ॥ १९
वायव्यां(यायां) तु वारुण्यां गर्भा ये संभवन्ति च । मध्यमं वर्षणं दद्युः सस्य[14]संपदं[15]मेव च ॥ २०
शिष्टं सुभिक्षं विज्ञेयं जघन्या नात्र संशयः । मन्दगाश्च घना वा च सर्वतश्च सुपूजिताः ॥ २१
मारुतः तत्प्रभवाः(क्षाः) गर्भा धूयन्ते[16] मारुतेन[17] च । वाता(तो) वर्षन्तु गर्भांश्च करोत्यपकरोति च ॥ २२
कृष्णानीलाश्च रक्ताश्च पीताः शुक्लाश्च सर्वतः । व्यामिश्राश्चापि ये गर्भाः स्निग्धाः सर्वत्र पूजिताः ॥ २३
अप्सराणां तु सदृशाः पक्षिणां जलचारिणाम् । वृक्ष-पर्वतसंस्थाना गर्भाः सर्वत्र पूजिताः ॥ २४
वापी[18]-कूप-तडागानि नद्यश्चापि मुहुर्मुहुः । पूर्यंते[19] तादृशैर्गर्भैस्तोयक्लिन्नधरावहैः ॥ २५
नक्षत्रेषु तिथौ चापि मुहूर्ते करणे दिशि । यत्र यत्र समुत्पन्नाः स्निग्धाः सर्वत्र पूजिताः ॥ २६
*सुसंस्थानाः सुवर्णाश्च सुवेषाः स्वभ्रजा[20] घनाः । सुबिन्दवः स्थिता गर्भाः सर्वे सर्वत्र पूजिताः ॥ २७
कृष्णा रूक्षाः सुखण्डाश्च विद्रवन्तः पुनः पुनः । विस्वरा[21] रूक्षशब्दाश्च गर्भाः सर्वत्र निंदिताः ॥ २८
†अन्धकारसमुत्पन्ना गर्भास्ते तु न पूजिताः । चित्राः स्रवन्ति सर्वाणि गर्भाः सर्वत्र निंदिताः ॥ २९
मन्दवृष्टिमनावृष्टिं भयं राजपराजयम् । दुर्भिक्षं मरणं रोगं गर्भाः कुर्वन्ति तादृशम् ॥ ३०

---

1 A D °मासं । 2 A वर्षेषु; D वर्षंति । * C भद्रबाहुवचो यथा ॥ † C भयदा तोयदा तदा । 3 B सधूम° । 4 B सना सजः; C सनीरजा; D सवागजा । 5 A क्षीरं । 6 A च सा; D not found. 7 A अङ्गार्क; B अंगरकान्; C अंकारकं । 8 A मुल्येण । 9 A अभिजनाः । 10 A °गमनदक्षाः; B °गगणगच्छाः C °गमनपूर्वाः । 11 A ताशु; C पश्चाद् । 12 C दूरोदका । ‡ C This is not found in this Ms. 13 A सुदारणे; C सवारुणे; D सदारुणे । ¶ C From this line onwards five lines are missing in this Ms. 14 B सस्याः; D संपदं । 15 D सस्यम् । 16 D ध्रियते । 17 B मारुतं; C मारुता । 18 A C D वप्र° । 19 A पूते; B D पूज्यंते । * C this st. is not found in this Ms. 20 A शुभ्रजा । 21 A C D विश्वरा । † Before this stanza, the following st. is found in B C D:–अत्युष्णाश्चातिशीताश्च बहूदका विकृताश्च ये । चित्राः स्रवन्ति सर्वाणि गर्भाः सर्वत्र निंदिताः ॥

मार्गशीर्षे तु गर्भास्तु ज्येष्ठामूलं समादिशेत् । ⊙पौषमासस्य गर्भास्तु विन्द्या[1]दाषाढिकाम् बुधाः ॥ ३१
माघजात्स्रवणे विन्द्यात् प्रोष्ठपदे च फाल्गुनात् । चैत्रामश्वयुजे विन्द्याद्गर्भं जलविसर्जनम्[2] ॥ ३२
मन्दोदा[3]ः प्रथमे मासे पश्चिमे ये च कीर्तिताः । शेषा बहूदका ज्ञेयाः प्रशस्तैर्लक्षणैर्यदा ॥ ३३
यानि रूपाणि दृश्यन्ते गर्भाणां यत्र यत्र च । तानि सर्वाणि ज्ञेयानि भिक्षूणां भैक्षवर्तिनाम् ॥ ३४
सन्ध्यायां यानि रूपाणि मेघेष्वभ्रेषु यानि च । तानि गर्भेषु सर्वाणि यथावस्थं[4] निरीक्षयेत् ॥ ३५
ये केचिद् विपरीतानि पठ्यन्ते[5] तानि सर्वशः । लिङ्गानि तोय-गर्भेषु भयदेषु भवेत्[6] तदा ॥ ३६
गर्भा यत्र न[7] दृश्यन्ते तत्र विन्द्यान्महद्भयम् । उत्पन्ना वा श्रवन्त्याशु भद्रबाहुवचो यथा ॥ ३७
निर्ग्रन्था यत्र गर्भांस्तु न पश्येयुः कदाचन । तं देशं प्रथमं त्यक्त्वा सगर्भं त्वरितं श्रयेत् ॥ ३८

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते गर्भलक्षणं नाम द्वादशोऽध्यायः ॥

अथातः संप्रवक्ष्यामि यात्रामत्र सुखावहाम् । निर्ग्रन्थदर्शितां[8] तथ्यां[9] पार्थिवाणां जिगीषिणाम् ॥ १
आस्तिकाय विनीताय श्रद्धानाय धीमते । कृतज्ञाय सुभक्ताय *यात्रा सिध्यति श्रीमते ॥ २
अहंकृतं तदा(था)[10] क्रूरं नास्तिकं पिशुनं शिशुम् । कृतघ्नं चपलं[11] †भीरुं[12] श्री[13](?) जंहात्यबुधं शठम् ॥ ३
वृद्धान् साधून् समागम्य दैवज्ञांश्च विपश्चितान्[14] । ततो यात्राविधिं कुर्यान्नृपस्तं पूज्यबुद्धिमान् ॥ ४
राज्ञा बहुश्रुतेनापि प्रष्टव्या ज्ञाननिश्चिताः । अहङ्कारं परित्यज्य तेभ्यो गृह्णीत निश्चयम् ॥ ५
ग्रह-नक्षत्र-करणं तिथयो मुहूर्त्ताः स्वराः । लक्षणं व्यञ्जनो-त्पाता निमित्तं साधुमङ्गलम्[15] ॥ ६
‡पूर्वं च पूजिता ह्येते निमित्ता भूभृतैरपि । तस्माद्धि पूजनीयाश्च निमित्ताः सततं नृपैः ॥ ७
¶हस्त्यश्वरथपादातं बलं खलु चतुर्विधम् । निमित्ते तु तथा ज्ञेयं तत्र तत्र शुभाऽशुभम् ॥ ८
गति-स्वर-मदोपेता हीयन्ते हस्तिनो यथा । §अहोरात्रान्यमाक्रोशुः(?) तत् प्रधानवधस्तथा ॥ ९
यावच्छायाकृतिरवैर्हीयन्ते वाजिनो यदा । विमनस्का विगतयः प्रधानस्य वधस्तथा ॥ १०
मेख-शङ्खस्वनाभा[16]श्च हेम-रत्नविभूषिताः । छाया[17]प्रहीणाः[18] कुर्वन्ति तत् प्रधानवधस्तथा ॥ ११
‖शौर्य-शस्त्र-बलोपेता विख्याताश्च पदातयः । परस्परेण भिद्यंते तत् प्रधानवधस्तदा ॥ १२
**निमित्ते लक्षयेदेतां चतुरङ्गां तु वाहिनीम् । नैमित्तः स्थपतिर्वैद्यः[19] पुरोधा[20]श्च ततो[21] विदुः[22] ॥ १३

---

⊙ From the second half of this st. the portion covering some 15 sts. is not found in C and D both. Contextually it is not fitting and hence it is not embodied in the text here but is placed after the seventh stanza in the thirteenth chapter as it is found there in C and D and is contextually fitting also there.
1 C दद्यात् । 2 C °विवर्जितम् । 3 C प्रथमे । 4 A B C यथावत् । 5 A पथ्यन्ते । 6 C न चेत्; D भयं तेषु । 7 A missing in this Ms. 8 A C D °देशिनाम् । 9 A तस्या । * C यात्रां शिप्य निधीयते । 10 A B D तया । 11 A च फलं । † C वर्जयेत नृपं सठं । 12 A भारुं । 13 A स्त्री । 14 A विनिश्चितान् । 15 C सर्वलक्षणम् । ‡ A This is not found in this Ms. ¶ A B D यदि दुर्गबलं भवेत् । § A आहारमात्रेयु; C आहारोञ्वारप्राणाद्यैः; D अहोरोमात्रेयुः । 16 A °नाभासा; C °नाम्वाहा । 17 B जाया° । 18 A °प्राचीण । ‖ A this st. is not found in this Ms. ** A B Before this st. one line which is probably latter half of a stanza is found but it is dropped in the constituted text as it is not found in C and D. It is this:-एवमेव जयं कुर्युर्विपरीता न संशयः ॥ 19 A स्थपितो । 20 A तत्पुरेश्च । 21-22 A B D शुभाशुभम् ।

चतुर्विधोऽयं विष्कम्भस्तस्य[1] विम्बाः[2] प्रकीर्तिताः ।
स्निग्धो जीमूतसंकाशः सुस्वनः[3] सास(शास्त्र)विच्छुं[4]भः[5] ॥ १४

नैमित्तः साधुसंपन्नो राज्ञः कार्यहिताय सः । संघा[6](धा)ता पार्थिवो[7] युक्तः समानस्थाप्यकोविदः ॥ १५

स्कन्धावारनिवेशेषु कुशलः स्थपतिः स्मृतः । काय–शल्य–शलाकासु विषो[8]–न्मादे[9]–ज्वरेषु[10] च ॥ १६

चिकित्सां[11]निपुणः[12] कार्यः राज्ञा वैद्यस्तु यात्रिकः। ज्ञानवानल्पवा[13]ग्ग्मी च क्षांतो[14] मुक्तो[15] स(श)मप्रियः ॥ १७

मानो–न्मा[16]न–प्रभायुक्तो पुरोधा[17] गुणवांछि[18]तः । *स्निग्धो गम्भीरघोषश्च मासावसं[19](?)समायु[20]धः ॥ १८

छाया[21]–लक्षणपुष्टश्च सुवर्णः पुष्टए(?) सुवाक् । सबलः[22] पुरुषो विद्वान् क्रोधनश्चपलः शिशुः ॥ १९

हिंस्रो[23] विवर्णः[24] पिङ्गो वा †निरोमा निवरोपगत्(?) । रक्तश्मश्रुः[25] पिङ्गनेत्रो गौरस्ताम्रः पुरोहितः ॥ २०

नित्योद्विग्नो नृपहीनो युक्तः प्राज्ञः[26] सदाहितः । एवमेतान् यथो[27]द्दिष्टान् सत्कर्मसु च योजयेत् ॥ २१

‡इतरेतरयोगेन न सिद्ध्यन्ति कदाचन । अशान्तः शान्तकरणः शांतः पुष्पभिचारिणाम् (?)॥] २२

§यद्देवाऽ-सुरयुद्धे च निमित्तं दैवतैरपि । कृतप्रमाणं च यस्मात् यद्वृत्तं[28] दैवतैरपि ॥ २३

ज्ञान-विज्ञानभुक्तोऽपि लक्षणैर्यैर्विवर्जितः । तं(न)साधुकार्यगो ज्ञेयो यथा व[29]क्रो रथस्तथा ॥ २४

यस्तु लक्षणसंपन्नो ज्ञानेन च समायुतः । स साधुकार्यगो ज्ञेयो यथा सर्वाङ्गिको[30] र[31]थः ॥ २५

अल्पेनापि तु ज्ञानेन कर्मज्ञो लक्षणान्वितः । तद् विन्द्यात् सर्वमतिमान् राजकर्मसु सिध्यति ॥ २६

अपि[32] लक्षणवाम्मुख्यः कंचिदर्थं प्रसाधयेत् । ज्ञानेन बलहीनस्तु वेदवानपि साधयेत् ॥ २७

¶यथाऽन्धः पथिको भ्रष्टः पथि क्लिश्यत्यनायकः । अनैमित्तस्तथा राजा नष्टे श्रेयसि क्लिश्यति ॥ २८

यथा तमसि चक्षुष्मान्न रूपं साधु पश्यति । अनैमि[33]त्तस्तथा राजा न श्रेयः साधु यास्यति ॥ २९

$यथा वक्रो रथो गन्ता चित्रं(?) ताव(?)यथास्वनम् । अनैमित्तस्तथा राजा न सेनाफलमीहते ॥ ३०

चतुरङ्गान्वितो[34] युद्धं[35] कुलालो वर्तिनं यथा । अवनष्टं[36] न गृह्णाति बर्जितं सूत्र[37]तंतुना ॥ ३१

चतुरङ्गबलोपेत[38]स्त[39]त्तथा राजा न शक्नुयात् । अवि(व)नष्टफलं भोक्तुं निमित्तेन विवर्जितम् ॥ ३२

तस्माद्राजा निमित्तज्ञं अष्टाङ्गकुशलो[40](लं) वरम्[41] । बिभृयात् प्रथमं प्रीत्याऽभ्यर्थयेत् सर्वसिद्धये ॥ ३३

आरोग्यं जीवितं लाभं सुखं मित्राणि[42] संपदः[43] । ‖धर्मोऽ-र्थ-काम-मोक्षाय तदा यात्रा नृपस्य[44] हि[45] ॥ ३४

**शय्या[46]-ऽऽसनं थानयुग्मं[47] हस्त्य-श्वं स्त्री-नरं स्थितम् । वस्त्रान्त-स्वप्न-योधांश्च यथास्थानं स योक्ष्यति॥ ३५

---

1 A B विष्टम्भः । 2 A तस्याम्वा; B तस्याश्चाव । 3 A B D सुस्वप्न° । 4-5 A B D सस्वविल्सकान् । 6 A D संघात्; B ससंघात । 7 A पार्श्वयिवो । 8 A B D विशेष° । 9 A °उत्पाद°; C °उत्पात° । 10 A °करेषु । 11 A B D विचिकित्सानि । 12 A B D पुनः । 13 A °धान्याल्प°; B °ध्यानाल्प° । 14 A क्रीतः; । 15 B स्थिरासन° । 16 A मनोन्माथेन । 17 A B D बपुष्मान् । 18 A D छान्तेयेच्छविः; B शान्तये शुचिः । * This st. and the following three sts. are not found in this Ms. 19-20 A °वस्थमान् बुधः । 21 B वयो° । 22 A साधन° । 23 B हंसो; D हिंसो । 24 B त्रिवर्ण°; D नृवर्ण° । † B निरोमाविवरोपरान्; D निरोमाविदुरोपरात् । 25 A °साश्रु । 26 A प्रांक्षु । 27 A समा° । ‡ C In place of this line the following is found in C:–पूजयेच्च सदा नित्यं ततो यात्रा समृद्ध्यति । § C Five sts. including this also are not found in this Ms. 28 B वृत्तांत; D निवृत्तं । 29 B D चक्रे । 30 A °रगः; D अथ । 31 A सर्वाङ्गकारयः । 32 A अप° । ¶ A B D In place of this line the following line is found in these Mss.:–पथं चौदसिको भ्रष्टः पथिः क्लिश्यत्यनात्मवान् । 33 C सर्वांतिक । $ C Three following sts. including this are not found in this Ms. 34-35 A चतुरङ्गान् वियुद्ध° । 36 B अनष्टं । 37 B तत्र । 38-39 A C चतुरङ्गबलोऽपित । 40 C मुख्यं सकुशलं । 41 C शुचिम् । 42 A मिश्राणि । 43 C संततिः । ‖ A B D धर्मार्थ-काम जानीयात् । 44-45 A B D न पश्यति । ** C Four sts. including this are not found in this Ms. 46 A मृगा° । 47 A B °युगं ।

भृत्या-ऽमात्यास्त्रयः पूज्या राज्ञा स्थाप्याः सुलक्षणाः । एषां कुलक्षणै राजा लक्षणोऽप्यवसीदति ॥ ३६
तस्माद् देशे च काले च सर्वज्ञानवतां वरम् । सुमनाः पूजयेद् राजा नैमित्तं दिव्यचक्षुषम् ॥ ३७
न वेदा नापि चाङ्गानि न विद्याश्च पृथक् पृथक् । प्रसाधयन्ति तानर्थान्निमित्तं यत् सुभाषितम् ॥ ३८
अतीतं वर्तमानं च भविष्यद्यच्च किञ्चन । सर्वं विज्ञायते येन तज्ज्ञानं नेतरं मतम् ॥ ३९
*स्वर्गं प्रीतिफलं प्राहुः सौख्यं धर्मविदो जनाः । तस्मात् प्रीतिः सखा ज्ञेया सर्वस्य जगतः सदा ॥ ४०
स्वर्गेण तादृशा प्रीतिर्विषयैर्वापि मानुषैः । यदि स्पष्टा निमित्तेन सतां प्रीतिस्तु जायते ॥ ४१
तस्मात् स्वर्गास्पदं पुण्यं निमित्तं जिनभाषितम् । पावनं प्रवरं श्रीमत् कामदं वा प्रसादतः[1] ॥ ४२
रागद्वेषौ च मो(हं)हश्च च वर्जयित्वा निमित्तवित् । देवेन्द्रमपि निर्भीतो यथाशास्त्रं समादिशेत् ॥ ४३
सर्वाण्यपि निमित्तानि निमित्तान्यपि सर्वशः । निमित्तं पृच्छतो यानि निमित्तानि भवन्ति तु ॥ ४४
यथान्तरिक्षात् पतितं[3] यथा[4] भूमौ च[5] तिष्ठति । †तथाङ्गजनिता चेष्टं(ष्टा)[6] निमित्तं फलमात्मकम्[7] ॥ ४५
तथैवाम्भो यथा निम्ने सेतुबन्धे च तिष्ठति । चित्ते निम्ने तथा तद् वै विन्द्याद् बंधफलात्मकम्[8] ॥ ४६
बहिरङ्गादिविषयमन्तरङ्गाच्च[9] चिन्तितम् । तज्ज्ञः शुभाऽ-शुभं ब्रूयान्निमित्तज्ञानकोविदः ॥ ४७
सुनिमित्ते[10] न संयुक्तस्तत्परैः[11] साधुवृत्तयः[12](?) । अदीनमन-संकल्पो भव्यादिं[13] लक्षयेद् विधिम्[14] ॥ ४८
कुञ्जरस्तु[15] यदा नर्दे[16]द्धूयमाने[17] हुताशने । स्निग्धमुच्चं च निर्भ्रान्तं राजा विजयमावहेत् ॥ ४९
एवं हय-वृषाश्चाऽपि सिंह-व्याघ्राश्च सुस्वराः[18] । नर्दयन्ति तु सैन्यानि तदा राजा प्रमर्दति ॥ ५०
स्निग्धोऽल्पघोषो धूम्रोऽथ गौरवर्णो महानृजुः । प्रदक्षिणोऽप्यवच्छिन्नः सेनानी विजयावहः ॥ ५१
कृष्णो वा विकृतो रूक्षो वामावर्तो हुताशनः । हीनार्चिर्धूमबहलः स प्रस्थाने भयावहः ॥ ५२
सेनाग्रे हूयमानस्य यदि पीता शिखा भवेत् । श्यामाऽथवा यदा[19] रक्ता पराजयति[20] सा[21] चमूः ॥ ५३
‡यदि होतुः पथे शीघ्रं जुह्वतः शृङ्गमग्रतः । पार्श्वतः पृष्ठतो वाऽपि तदेवं फलमादिशेत् ॥ ५४
यदि धूमाभिभूता स्याद् वातो भस्म निपातयेत् । आहूतः[22] कम्पते वाऽऽज्यं[23] न सा यात्रा विधीयते ॥ ५५
राजा परिजनो वापि कुप्यते मन्त्रशासने[24] । होतुराज्यविलोपे च तस्यैव[25] वधमादिशेत्[26] ॥ ५६
यद्याज्यभाजने केशा भस्मास्थीनि पुनः पुनः । सेनाग्रे हूयमानस्य[27] मरणं तत्र निर्दिशेत् ॥ ५७
आपो होतुः पतेद्धस्तात् पूर्णपात्राणि वा भुवि । कालेन स्याद् वधस्तत्र सेनाया नात्र संशयः ॥ ५८
¶यदा होवा तु सेनायाः प्रस्थाने स्खलते मुहुः । बाधयेद्[28] ब्राह्मणान् भूमौ तदा स्ववधमादिशेत् ॥ ५९
धूमः कुणिमगन्धो वा पीतको वा यदा भवेत् । सेनाग्रे हूयमानस्य तदा सेनापराजयः ॥ ६०
मूषको नकुलस्थाने वराहो गच्छतेतरात् (?) । वामावर्तः पतङ्गो वा राज्ञो व्यसनमादिशेत् ॥ ६१

---

* C This and the following stanza are not found in this Ms. 1 B D सर्वज्ञ° । 2 A प्रमादतः । 3–4 C पतितमत्र । 5 C न । † This line and the following line are not found in this Ms. 6 A चष्टं । 7 A °मारिमकाम् । 8 A वधं; C वन° । 9 C समन्ताच्च । 10 A सनिमित्तात्; C श्रुतिमंत्रेण; D सनिमित्तेन । 11 A B D तत्परं । 12 A साधु चेत्तदा; B साधु वेत्तया; D साधु वेतया । 13 C हन्यादीन् । 14 B द्विधा; D द्विधम् । 15 C गुञ्जारति । 16 C हस्ती । 17 A न देदीप्यमाने; D नर्द्धेन्वयमाने । 18 B जायते; C सस्वनाः । 19 D तदा । 20–21 A माव भूः । ‡ Before this stanza, the following additional stanza is found in A :– यदि होतुः पथे शीघ्रं जुह्वतः स्नापि मन्नतः । पार्श्वतः पृष्ठतो वाऽपिराजा विजयमादिशेत् ॥ 22 A आहूयते । 23 A राज्यं; B वाच्यं; C जापि । 24 C °साधने । 25–26 C तस्य व्यसनम् । 27 A धूयमानस्य । ¶ C This and the following stanza are not fond in this Ms. 28 A वौचयै; D याचयत् ।

मक्षिका वा पतङ्गो वा यद्वाऽप्यन्यः सरीसृपः । सेनाग्रे निपतेत्[1] किञ्चिद्धूयमाने वधं वदेत् ॥ ६२

शुष्कं[2] प्रदह्यते[3] यदा[4] वृष्टिश्चा[5]प्यपवर्षति[6] । ज्वाला धूमाभिभूता तु ततः सैन्यो(सेना) निवर्तते ॥ ६३

युद्धं[7] प्रदक्षिणं देवा यदि गच्छंति वा दिशम् । राज्ञो विजयमाचष्टे वामतस्तु पराजयम् ॥ ६४

जुहृत्यनुपसंपन्नै[8]स्थानं तु यत् पुरोहितः । जित्वा शत्रून्[9] रणे[10] सर्वान् राजा तुष्टो निवर्तते ॥ ६५

*यस्य वा सम्प्रयातस्य प्रमुखे पृष्ठतोऽपि वा । पतत्युल्का सनिर्घाता वधं तस्य निवेदयेत् ॥ ६६

सेनां यान्ति प्रयातां यां क्रव्यादाश्च जुगुप्सिताः । अभीक्ष्णं विस्वरा घोरा सा सेना वध्यते परैः ॥ ६७

प्रयाणे निपतेदुल्का प्रतिलोमा यदा चमूम् । निवर्तयति मासेन[11] तत्र यात्रा न सिध्यते[12] ॥ ६८

†छिन्ना भिन्ना प्रदृश्येत यदा संप्रस्थिता चमूः । निवर्तयेत स शीघ्रं न सा सिद्ध्यति कुत्रचित् ॥ ६९

यस्याः प्रयाणे सेनायाः सनिर्घाता मही चलेत्[13] । न तया संप्रयातव्यं साऽपि वध्येत सर्वशः ॥ ७०

अग्रतस्तु सपाषाणं तोयं वर्षति वासवः । सङ्ग्रामं घोरमत्यन्तं[14] जयं राज्ञश्च[15] शंसति[16] ॥ ७१

प्रतिलोमो[17] यदा वायुः सपाषाणो रजस्करः । निवर्तयति प्रस्थाने परस्परजयावहः ॥ ७२

मारुतो दक्षिणो वापि(ति) यदा हन्ति परां चमूम् । प्रस्थितो प्रमुखं तस्य विन्द्यात् तत्र पराजयम् ॥७३

यदा सूर्यात्[18] परं[19] सेनां[20] समागत्य महाजनः । तस्य विजयमाख्याति भद्रबाहुवचो यथा ॥ ७४

हीनाङ्गा जटिला बद्धा व्याधिता[21]ः पापपांशवः[22] । षण्ढाः पापस्वरा ये च प्रयाणे ते तु निन्दिताः ॥ ७५

नग्नं प्रव्रजितं दृष्ट्वा मङ्गलं मङ्गलार्थिना । कुर्यादमङ्गलं यस्तु तस्य सोऽपि न मङ्गलम् ॥ ७६

पीडितोऽपचयं कुर्यादाक्रुष्टो वध-बन्धनम् । ताडितो मरणं दद्याद् वासितो रुदितं[23] तथा ॥ ७७

पूजितः सोत्तराङ्गेन[24] लाभं राज्ञः समादिशेत् । तस्मात्तु[25] मङ्गलं कुर्यात्[26] प्रशस्तं[27] साधुदर्शनम्[28] ॥ ७८

दैवतं[29] तु यदा बाह्यं[30] राजा सत्कृत्य[31] स्वं पुरम् । प्रवेशयति तद्राजा बाह्यस्तु लभते पुरम् ॥ ७९

‡वैजयन्त्यो विवर्णाश्च राज्ञो बाह्यो यदा ग्रहः । पराजयं समाख्याति तस्मात् तां परिवर्जयेत् ॥ ८०

सर्वार्थेषु प्रमत्तश्च यो भवेत् पृथिवीपतिः । हितं न शृणुतश्चापि तस्य विन्द्यात् पराजयम् ॥ ८१

अभिद्रवन्ति यां सेनां विस्वरं मृगपक्षिणः । §श्व-मानुष-शृगाला वा सा सेना वध्यते परैः[32] ॥ ८२

भग्नं दग्धं च शकटं यस्य राज्ञः प्रयायिनः । देवोपसृष्टं जानीयान्न तत्र गमनं शिवम् ॥ ८३

उल्का वा विद्युतोऽभ्रं वा कनकाः सूर्यरश्मयः । स्तनितं यदि वा छिद्रं सा सेना वध्यते परैः ॥ ८४

प्रयातायास्तु सेनाया यदि कश्चिन्निवर्तते । चतुःपदो द्विपदो वा न सा यात्रा विशिष्यति ॥ ८५

प्रयातो यदि वा राजा निपतेद् वाहनात् कचित् । अन्यो वाऽपि गजाऽश्वो वा साऽपि यात्रा जुगुप्सिता[33] ॥८६

क्रव्यादाः पक्षिणो[34] यत्र निलीयन्ते ध्वजादिषु । निवेदयन्ति ते राज्ञस्तस्य घोरं चमूवधम् ॥ ८७

---

1 A नृपतेः । 2 A युद्धं; C जुहुयात् । 3 A प्रदद्ये; C प्राप्यते । 4 C वृष्टिम् । 5 C वायुः । 6 C उपसर्पति । 7 D जुहुत । 8 A °सर्प्पणं; C °सख्यं; D °सर्पाणं । 9–10 C शत्रुगणान् । * A B D यस्यां चमू प्रवर्त्तायां । 11 A या सेना; B मासेना; D सा सेना । 12 A D शिष्यते । † C not found in this Ms. 13 C °तले । 14 C आख्याति । 15 A B राजश्च; C राष्ट्रस्य । 16 C संप्रति । 17 A B D अप्रतिलोमः । 18 C तु या; D तु याति । 19 C परा; D अपरं । 20 A B D सेना । 21 A B D बाधिताः । 22 C येपि वासवः; D पापसंभवः । 23 C रुधिरं । 24 B D सो तरंगेण; C ततः सम्यक् । 25 A °न्न; B D °स° । 26–27 A B कुर्यान्न साधु; D साधु साधुः । 28 A B D °मंगलम् । 29 A दैवतं; B दैवतं । 30 A वारा; B वाह्या; D वाह्या । 31 B स्वीकृत्य । ‡ C not found in this Ms. § C दिशि दिशां समाश्रित्य । 32 C खरैः । 33 A न शिष्यते । 34 A दक्षिणः ।

मुहुर्मुहुर्यदा राजा निवर्तन्तो निमित्ततः । प्रयातः परचक्रेण सोऽपि वध्येत संयुगे ॥ ८८

*यदा राज्ञः प्रयातस्य रथश्च पथि भज्यते । युगाद्यं चोपकरणं तस्य राज्ञो वधं दिशेत् ॥ ८९

प्रयाणे पुरुषा वाऽपि यदि नश्यन्ति सर्वशः । सेनाया बहुशश्चाऽपि हता दैवेन सर्वशः ॥ ९०

यदा राज्ञः प्रयातस्य दानकं[1] कुरुते[2] जनः । हिरण्यव्यवहारेषु साऽपि यात्रा न सिध्यते[3] ॥ ९१

प्रवरं घातयेद् भृत्यं प्रयाणे यदि पार्थिवः । अभिषिञ्चेत् सुतं चापि चमूस्तस्यापि वध्यते ॥ ९२

विपरीतं यदा कुर्यात् सर्वकार्यं मुहुर्मुहुः । तदा तेन परित्रस्ता सा सेना परिवर्तते ॥ ९३

†परिवर्तेद् यदा वातः सेनामध्ये यदा यदा । तदा तेन परित्रस्ता सा सेना परिवर्तते ॥ ९४

विशाखा-रोहिणीभ्यां[4] तु[5] नक्षत्रैरुत्तरैश्च यत् । पूर्वाह्णे च प्रयातस्य हतसैन्यो निवर्तते ॥ ९५

पुष्येण मैत्रयोगेन[6] यो[7]ऽश्विन्यां[8] च नराधिपः । अपराह्णे विनिर्याति वाञ्छितं स समाप्नुयात् ॥ ९६

दिवा हस्ते तु रेवत्यां वैष्णवे[9] च न शोभनम् । प्रयाणं सर्वभूतानां विशेषेण महीपतेः ॥ ९७

हीने मुहूर्ते नक्षत्रे तिथौ च करणे तथा । पार्थिवो योऽभिनिर्याति अचिरात्[10] सोऽपि बध्यते ॥ ९८

‡यथामयुक्ति(?)वा राजा मात्रामधिकमूषते । तदा ससैन्यो बध्येत यदि नैव निवर्तते ॥ ९९

विहारानुत्सवांश्चापि कारयेत् पथि पार्थिवः । स सिद्धार्थो निवर्तेत[11] भद्रबाहुवचो यथा ॥ १००

वसुधा वारि वा यस्य[12] यानेषु[13] प्रतिहीयते[14] । वंश्यादयो निपतन्ते ससैन्यो बध्यते नृपः ॥ १०१

सर्वेषां शकुनानां च प्रशस्तानां स्वरः शुभः । तूर्णं विजयमाख्याति प्रशस्तानां च दर्शनम् ॥ १०२

फलं वा यदि वा पुष्पं ददते यस्य पादपः । अकालजं प्रयातस्य न सा यात्रा विधीयते ॥ १०३

येषां निवसनं[15] किञ्चित् विपरीतं मुहुर्मुहुः । स्थालिका[16] पिठरो[17] वाऽपि तस्य तद् वधमीहते ॥ १०४

आचाराद्यं[18] भवेन्नृणां तद् विनाशाय कल्पते । निवर्तयन्ति ये केचित् प्रयाता बहुशो नराः ॥ १०५

यात्रामुपस्थितोपकरणं तेषां च स्याद् ध्रुवम्[19] वधः[20] । पक्वान्नं विरसं दग्धं दग्धभूमिषु मीहते(?) ॥ १०६

तस्य व्याधिभयं चाऽपि मरणं वा पराजयम् । रथप्रहरणं[21] चैवं[22] ध्वज-ध्यानं[23] यो नृपः ॥ १०७

चित्रं[24] कुर्यात् कश्चिन्नीलं स च मन्त्री च बध्यते । म्रियते[25] पुरोहितो वाऽस्य छत्रं वा पथि भज्यते ॥ १०८

$.............................. । अनग्निर्ज्वलनं[26] वा स्यात् सोऽपि राजा विनश्यति ॥ १०९

द्विपदश्चतुःपदो वाऽपि स(श)कृन्मुं[27]त्रति[28] विस्वरैः[29] । बहुशो व्याधितार्त्ता वा सा सेना विद्रवं व्रजेत् ॥ ११०

सेनायास्तु प्रयातायाः कलहो यदि जायते । द्विधा त्रिधा वा सा सेना **विनश्यति न संशयः ॥ १११

‖जायते चक्षुषो व्याधिः स्कन्धावारे प्रयायिनाम् । अचिरेणैव कालेन साऽग्निना दह्यते चमूः ॥ ११२

व्याधयश्च प्रयातानामतिशीतं विपर्ययेत्[30] । अत्युष्णं चातिरूक्षं च राज्ञो यात्रा न सिध्यति ॥ ११३

††निविष्टो यदि सेनाग्निः क्षिप्रमेव प्रशाम्यति । ‡‡उपवह्य सदत्तस्य (?) भज्यते साऽपि बध्यते ॥ ११४

---

* C This and next stanza are not found in this Ms. 1 A दानकाकुशते । 2 B दानवं; C नाणकं । 3 A D शिष्यते; C दृश्यते । † D This st. is not found in this Ms. 4 A B D °भातु । 5 A B D मित्र° । 6 A C °देवेन 7–8 A तेन चेत्त; B D देवेन च । 9 C व्यसनः । 10 B विरसः; C विदासौ; D विरस्से । ‡ C not found in this Ms. 11 A न निवर्त्तेत; C न वर्तेत । 12 C धूमो । 13 C याने । 14 C उदीर्यते । § C तदा ससैन्यो बध्येत यदा वा वा न निवर्त्तते । 15 B विवसनं; C न विषयं । 16 B D स्फालिका । 17 A B D ऽपि परो । ¶ C This st. and next also are not found in this Ms. 18 B आवाराज्यं । 19 B वधो वा; D वधः । 20 B not found. 21–22 C °प्रहरणानां च । 23 C ध्वजाथानं । 24 C चिह्नं । 25 A श्रियते । $ This first half is not found in any of the Mss. 26 A अग्नेः । 27 B D सकृत्; C कृतं । 28 C रवति । 29 C स्वरम् । ** C not found in this Ms. ‖ A विद्रवन्ति तदाऽनिशम् । 30 B D मवर्तते । †† C not found in this Ms. ‡‡ A उपधहासदत्तस्य; B उपदह्मसदत्तस्य ।

देवतावेष्टने[1] वर्षे[2] क्षीराणां कल्कने[3] तथा । विन्द्यान्महद्भयम् घोरं शान्तिं तत्र तु कारयेत् ॥ ११५

देवतान् दीक्षितान् वृद्धान् पूजयेत् ब्रह्मचारिणः । ततस्तेषां तपोभिश्च पापं राज्ञां प्रशाम्यति ॥ ११६

उत्पातकाश्च जायन्ते हस्त्य-श्व-रथ-पत्तिषु । भाजनेषु अनेकेषु राजबन्धश्चमूवधः ॥ ११७

उत्पाता विकृताश्चापि दृश्यन्ते ये प्रयायिनाम् । सेनायां चतुरङ्गायां तेषामौत्पातिकं फलम् ॥ ११८

*भेरी-शङ्ख-मृदङ्गाश्च प्रयाणे ये यथोचिताः । निवध्यन्ते[5](?)प्रयातानां विस्वरा वाहनाश्च ये[6] ॥ ११९

यद्यग्रतस्तु[7] प्रयायेत काकसैन्यं प्रयायिनाम् । विस्वरं निभृतं वाऽपि येषां विद्याच्चमूवधम्[8] ॥ १२०

राज्ञो[9] यदि[10] प्रयातस्य गायन्ते[11] ग्रासिकाः[12] पुरे[13] ।
चण्डानिलो[14][15] नदी[16](दिं) शुष्येत्[17] †सोऽपि बध्येत पार्थिवः ॥ १२१

‡देवता-ऽतिथिभृत्येभ्यो[18][19]ऽदत्वा[20] तु भुञ्जते यदा । §यदा भक्ष्याणि[21] भोज्यानि[22] तदा राजा[23] विनश्यति ॥ १२२

द्विपदाश्चतुःपदा वाऽपि यदाऽभीक्ष्णं रसन्ति[24] वै[25] । परस्परं सुसम्बद्धा[26] सा सेना वध्यते परैः ॥ १२३

ज्वलन्ति यस्य शस्त्राणि नमन्ते निष्क्रमन्ति[27] च । सेनायाः शस्त्रकोशेभ्यः साऽपि सेना विनश्यति ॥ १२४

नर्दन्ते[28] द्विपदा यत्र पक्षिणो वा चतुःपदाः । क्रव्यादास्तु विशेषेण तत्र संग्राममादिशेत् ॥ १२५

विलोमेषु च[29] वातेषु[30] दिनेषु[31] वाहनेषु च । शकुनेषु च दीप्तेषु युध्यतां[32] तु पराजयः ॥ १२६

युद्धप्रियेषु[33] हृष्टेषु[34] नर्दत्सु[35] वृषभेषु च । रक्तेषु चाभ्रजालेषु[36] सन्ध्यायां युद्धमादिशेत् ॥ १२७

अभ्रेषु च विवर्णेषु युद्धोपकरणेषु च । दृश्यमानेषु सन्ध्यायां सद्यः[37] संग्राममादिशेत् ॥ १२८

कपिले रक्त-पीते वा हरिते च तले[38] चमूः[39] । स सद्यः परसैन्येन वध्यते नाऽत्र संशयः ॥ १२९

काका गृध्राः शृगालाश्च कङ्का[40] ये[41]चामिषप्रियाः । पश्यन्ति[42] यदि सेनायां ¶प्रयातायां भयं भवेत् ॥ १३०

उलूका[43] वा बिराला वा मूषका वा यदा[44] भृशम्[45] ।
वासन्ते[46] यदि[47] सेनायां नियतं सोऽस्तिको[48] (सौप्तिको ?) वधः ॥ १३१

ग्राम्या[49] वा यदि वाऽऽरण्या[50] दिवा[51] व(वा)सन्ति[52] निर्भयम् ।
सेनायां संप्रयातायां सोऽस्तिको[53](सौप्तिको ?)ऽत्र भयं भवेत् ॥ १३२

मैथुनेन[54] विपर्यासं यदा कुर्युर्विजातयः[55] । रात्रौ दिवा[56] च सेनायां[57] सौप्तिको[58](कं) वधमादिशेत् ॥ १३३

1 A चेष्टनो; B वेष्टतो । 2 A वाऽस्य; B घाऽपि; D वाप्य । 3 A B D कल्पना । 4 A C D °थायिषु । * C this st. is numbered twice in this Ms. 5 C मानादंते । 6 C वा भयावहाः । 7 C सद्योऽग्रतः । 8 B °वधाम् । 9 C यदि । 10 C राज्ञो । 11 B मायते; C शांतये; D गायते । 12 A यासिका; B यामिकां; C यासिके । 13 A C पुरो । 14 A चन्द्रा°; C चन्द्रो । 15 C नीलो । 16 C नदां । 17 C पुष्पो । † C यस्य व्याधिभयंकरं । ‡ This st. is missing in A. 18 B तेवता । 19 B भूतेभ्यः । 20 B D दत्वा । § C The following latter half is found in this Ms. भक्षसेव्यानि सेनाया तदा सोऽपि विनश्यति । 21 B अक्षाणि; D भक्ष्याणि । 22 D भोज्याणि । 23 D राज्ञा । 24 C दसंति । 25 A चेत्; B ते । 26 C सुसंनज्ञा । 27 C न नमन्ति । 28 C नर्द्दयन् । 29–30 D प्रयातेषु । 31 A B C दीनेषु । 32 A बध्यतां । 33 C यद्धप्रियेषु । 34 C तुष्टेषु । 35 C तद्दत्सु° । 36 C °जलेषु । 37 C तस्य । 38 B तलै; C तपेत् । 39 C चमूम् । 40–41 A B D कंकेयाः । 42 All Mss. have got पश्यन्ति. It may be पतन्ति or दृश्यन्ते । ¶ C सा सेना बध्यते ध्रुवम् । 43 A अलूकाः । 44–45 A B D भृशन्ति वा । 46 C पश्यन्ति । 47 A तेऽभि; B D तेभि । 48 B सेस्विको; C सोऽस्तिको; D सोप्तिको । 49 A D ग्रामा; B आमा । 50 D अरण्यां । 51 C यदि । 52 B C पश्यंति; D वसंति । 53 The same variants as under 48. 54 C मिथुने तु । 55 All the Mss. have either got कुर्यात or कुर्वन्तिbut grammatically कुर्युः is better. 56 A B D दिवाऽपि । 57 A B D वा वासे । 58 The same variants as under 48. But here C has got सौप्तिक which is quite correct.

* चतुःपदानां मनुजा[1] यदा कुर्वन्ति वासितम्[2] ।
मृगा वा पुरुषाणां तु तत्रापि[3] सोऽस्तिको[4] (सौप्तिको ?) वधः[5] ॥ १३४

एकपादस्त्रिपादो वा त्रिशृङ्गो यदि वाऽधिकः । प्रसूयते पशुर्[6]यत्र तत्रापि सौप्तिको[7] वधः[8] ॥ १३५

अश्रु[9]पूर्णमुखादीनां शेरते च यदा भृशम् । पदा[10]न्विलिखमाना[11]स्तु हया[12] यस्य स बध्यते ॥ १३६

निष्कुटयन्ति[13] पादैर्वा[14] भूमौ वालान्[15] किरन्ति च । प्रहृष्टाश्च प्रपश्यन्ति[16]* तत्र सङ्ग्राममादिशेत् ॥† १३७

न चरन्ति यदा ग्रासं[17] न च पानं पिबन्ति वै । श्वसन्ति[18] वाऽपि धावन्ति विन्द्यादग्निभयं तदा ॥ १३८

क्रौञ्चस्वरेण स्निग्धेन मधुरेण पुनः पुनः । हेषन्ते[19] गर्वितास्तुष्टास्तदा राज्ञो जयावहाः ॥ १३९

प्रहेषन्ते[20] प्रयातेषु[21] यदा वादित्रनिःस्वनैः[22] । ‡लक्ष्यन्ते बहवो हृष्टास्तस्य राज्ञो ध्रुवं जयम् ॥ १४०

यदा मधुरश[23]ब्देन[24] हेषंति[25] खलु वाजिनः । कुर्यादभ्युत्थितं सैन्यं तदा तस्य पराजयम् ॥ १४१

अभ्युत्थितायां सेनायां लक्ष्यते यच्छुभाऽशुभम् । वाहने प्रहरणे वा तत्[26] तत्[27] फलं[28] समीहते[29] ॥ १४२

सन्नाहिको[30] यदा युक्तो[31] नष्टसैन्यो[32] बहिर्व्रजेत्[33] । §तदा राज्यप्रणाशस्तु अचिरेण भविष्यति ॥ १४३

अपवाह्यै[34] नरेन्द्रस्य हयमारुहते हयः । सेनायामन्यराजानां[35] तदा मार्गन्ति नागराः[36] ॥ १४४

अर्द्धयुक्ताः प्रधावन्ति[37] वाजिनस्तु[38] युयुत्सवः । हेषमानाः[39] प्रमुदितास्तदा ज्ञेयो जयो ध्रुवम् ॥ १४५

पादं[40] पादेन[41] मुक्तानि[42] निःक्रमन्ति[43] यदा हयाः । पृथग् पृथग् संस्पृश्यंते[44] तदा विन्द्याद्भयावहम् ॥ १४६

यदा राज्ञः प्रयातस्य वाजिनां संप्रणाहिकः । पथि च म्रियते यस्मिन्नचिरात्मानो भविष्यति ॥ १४७

‖शिरस्यास्ये च दृश्यन्ते यदा हृष्टास्तु वाजिनः । ¶तदा राज्ञो जयं विद्यान्नचिरात् समुपस्थितम् ॥ १४८

हयानां जघने[45] पार्यौ[46] पुच्छे पादेषु वा यदि । दृश्येता[47]ग्निरथा धूमौ[48]स्तदा विद्यान्महद्[49]भयम् ॥ १४९

---

1 A B D मनुजां । 2 A वासिताम्; B वासिनं; C मासितं । 3 A रात्राऽपि; B तत्रास्ति । 4 A सोऽस्तिको; B सोपिको; D सोस्तिको । 5 B विदः । 6 A वपुः; D वस्तुः । 7 A सोऽस्तिको; B सोपिको; D सोस्तिको । 8 B विधः । 9 A अस्तु । 10 A-यदान्; B यदान; C भूमिं । 11 A विलिखनानः; B लिखमानः; D विलिख्यमानाः । 12 C हयः । 13 A B D निकुटयंति । 14 A B D पादानां । 15 A चालां; B वालां; D बालाः । 16 A B वस्यन्ते; D तस्यंते च । 17 A D घासं; B ग्रासं । 18 C श्वसितं । 19 A B D हेषन्ति । 20 A प्रहेचयन्ते; B D प्रहेष्यंते । 21 C प्रयाणेषु । 22 B D ०निस्वनाः । * A B D प्रहृष्टा यत्र बहुशः । † C तदा युद्धं समादिशेत् । ‡ C This and the following st. are not found in this Ms. 23 B शब्द० । 24 B D सुखायोन । 25 B वेश्येत; D वेश्यत । 26 B D तत्र । 27–28 B D प्रलयम् । 29 B D ईहते । 30 A सन्नाहिकां । 31 A युक्तेषु; B D युक्ते । 32 A सैन्यैः; B तेषु सौन्ये; D तेषु सैन्ये । 33 B चहि; D बहि । § C The second half and the first half of the next stanza are not found in this Ms. 34 A अपबाह्य; D ओपवाह्य । 35 A ०राजेन; C D ०राजानं । 36 D नागरां । 37 C प्रवाधंति । 38 A B D यायिनः । 39 B हेयमाना; C हेषमाणाः । 40–41 B पादपादेन । 42 C मुख्यं तु । 43 B निक्रमन्ति; C लिष्क्रवंतो । 44 A C संस्पृश्य; B संपृष्टः । The following st. is additionally found in A only but as it is not found in other three Mss. I have not included it in the text:—विन्द्यात् प-राजाया राज्ञः पश्चिमार्द्धे यदा ज्वलेत पु । पूर्वार्द्धे ज्वमासेन हयानां डिजयं वदेत् ॥ १३१ ॥ It occurs in this Ms. after 149th st. ¶ C The second half is found as under in this Ms.:— हन्यात् तं स्वामिनं क्षिप्रं विपरीते धनागमा ॥ 45 C च यदा । 46 C नास्यां । 47 B जायेत; C दृश्यंते । 48 C धूमं । 49 A महा ।

हेषमानस्य[1] दीप्तास्तु निपतन्त्यर्चिषो[2] मुखात् । अश्वस्य विजयं श्रेष्ठमूर्द्धदृष्टिश्च[3][4] शंसते[5] ॥ १५०

*श्वेतस्य कृष्णं दृश्येत पूर्वकाये तु[6] वाजिनः । हन्यात् तं स्वामिनं[7] क्षिप्रं[8] विपरीते[9] वधागमम् ॥ १५१

वाचकस्य[10] वधं विन्द्याद् यदा स्कन्धे हयो ज्वलेत् । पृष्ठतो ज्वलमाने तु भयं सेनापतेर्भवेत् ॥ १५२

†तस्यैव तु यदा धूमो निर्धावति प्रहेषितः[11] । पुरस्यापि तदा नाशं निर्दिशेत् प्रत्युपस्थितम् ॥ १५३

‡सेनापतिवधं विद्याद् वालस्थानं[12] यदा ज्वलेत् । त्रीणि वर्षाण्यनावृष्टिस्तदा तद्विषये भवेत् ॥ १५४

अन्तःपुरविनाशाय मेढ्रं[13] प्रज्वलते[14] यदा । उदरं ज्वलमानं च कोशनाशाय[15] वा ज्वलेत् ॥ १५५

शेरते दक्षिणे पार्श्वे हयो[16] जयपुरस्कृतः । स्ववर्ग[17]शायिनश्चाहुर्जयमाश्चर्य[18]साधकः[19] ॥ १५६

वामार्धशायिन[20]श्चैव तुरङ्गा नित्यमेव च । राज्ञो यस्य न संदेहस्तस्य मृत्युं समादिशेत् ॥ १५७

§सौसुप्यन्ते[21](?) यदा नागः पश्चिमश्चरणस्तथा । सेनापतिवधं विद्याद् यदाऽन्नं च न भुञ्जते ॥ १५८

सदन्ता(:) पादचारी वा नाभिमन्नं(न्यं)ति[22] हस्तिनः । यस्यां तस्यां तु सेनायामचिराद्वध[23]मादिशेत् ॥ १५९

$निपतन्त्यग्रतो यद्वै त्रस्यन्ति वा रुदंति वा । निष्पद्यन्ते[24] समुद्विग्ना[25] यस्य तस्य वधं वदेत् ॥ १६०

क्रूरं[26] नदन्ति[27] विषमं विस्वरं[28] निशि हस्तिनः[29] । दीप्यमानास्तु केचित्तु तदा सेनावधं ध्रुवम् ॥ १६१

गो[30]-नाग[31]-वाजिनां स्त्रीणां[32] मुखाच्छोणितविन्दवः । द्रवन्ति बहुशो यत्र तस्य राज्ञः पराजयः ॥ १६२

नरा[33] यस्य[34] विपद्यन्ते प्रयाणे वारणाः[35] पथि[36] । कपालं गृह्य धावन्ति दीनास्तस्य पराजयः ॥ १६३

यदा धुनन्ति सीदन्ति निपतन्ति किरन्ति च । खादमानास्तु[37] खिद्यन्ते तदाऽऽख्याति पराजयम् ॥ १६४

हेषन्त्यभीक्षणमश्वास्तु[38] विलिखन्ति खरैर्धराम् । नदन्ति[39] च यदा नागास्तदा विन्द्याद् ध्रुवं[40] जयम्[41] ॥ १६५

पुष्पाणि पीत-रक्तानि शुक्लानि च यदा गजाः । अभ्यंतराग्रदन्तेषु दर्शयन्ति तदा जयम् ॥ १६६

यदा मुञ्चंति शुण्डाभिर्नागा नादं पुनः पुनः । परसैन्योपघाताय तदा विन्द्याद् ध्रुवं जयम् ॥ १६७

पादैः पादान् विकर्षन्ति तलैर्वा विलिखन्ति च । गजास्तु यस्य सेनायां विरुध्यन्ते ध्रुवं परैः ॥ १६८

मत्ता यत्र विपद्यन्ते न मद्यन्ते च योजिताः[42] । नागास्तत्र वधो राज्ञो महाऽमात्यस्य वा भवेत् ॥ १६९

यदा राजा निवेशेत ¶भूमौ कण्टकसङ्कुले । विषमे सिकताकीर्णे सेनापतिवधो ध्रुवम् ॥ १७०

‖श्मशानास्थि-रजःकीर्णे पञ्चदग्धवनस्पतौ । शुष्कवृक्ष[43]समाकीर्णे निविष्टो(ष्टो) वधमीहते ॥ १७१

कोविदारसमाकीर्णे श्लेष्मान्तकमहाद्रुमे । पिलु-कालनिविष्टस्य प्राप्नुयाच्च चिराद्[44] वधम्[45] ॥ १७२

असारवृक्षभूयिष्ठे[46] पाषाण-तृणकुत्सिते । देवतायतनाक्रान्ते निविष्टो वधमाप्नुयात् ॥ १७३

---

1 C हेषमाणस्य । 2 C अर्थितो । 3–4 C कुर्वन् दृष्टस्य । 5 A B D संशयेत् । * C This st. is not found in This Ms. 6 A पु । 7 B वाजिनं । 8 A क्षिसं । 9 A विपरीत । 10 C वाधकस्य । † C This st. occurs in this Ms. after 150th st. 11 A प्रमोहनः; B D प्रमोहतः । ‡ C The order of this st. is interchanged with the next in this Ms. 12 A वालमानं; B वालवानां D वालवानं । 13 C मद्रे । 14 C प्रज्वलनं । 15 D केश° । 16 A तदा । 17 C समस्ते । 18 C यवानां । 19 A अत्त्वध्यसाधकः; B आस्वार्थसाधकः; C आश्चर्यसाधकः । 20 A वामार्थ° । § C This and the following st. are not found in this Ms. 21 B सोसुप्यंते । 22 A नाभियन्ति; B नातिसन्नंति । 23 A तद्विरुद्धमघाव । $ A निष्पेस्यन्ति गृहस्था वै; B D निष्पेस्यंति गृहस्थाः स्युः । 24 B D निष्पतंति; C साद्विना । 25 C यस्य तुरगाः । 26 C करं; D कुरु । 27 B वदंति । 28 C विस्वनं । 29 B दन्तिनः । 30–31 C गवाग° । 32 C नृणां । 33 A न सद् । 34 C जस्य । 35 A वारणे; C वरुणा । 36 C यति । 37 A B D खाद्यमानाः । 38 A मेषास्तु; D मेखास्तु । 39 C नंदन्ति । 40-41 C पराजयम् । 42 D योजिताः । ¶ A B D भस्मसङ्कुलसङ्कुलम् । ‖ C This and the following st. are not found in this Ms. 43 D वर्ण° । 44-45 A चिराद्विपम्; D चिराद्धूतम् । 46 A °भूजिष्टं; C °याद्दष्ट° ।

अमनोज्ञैः फलैः पुष्पैः पापपक्षिसमन्विते । अधो[1]मार्गे[2] निविष्टश्च युद्धमिच्छति पार्थिवः ॥ १७४
*नीचे निविष्टस्य सदा नीचेभ्यो भयमादिशेत् । यथा दृष्टेषु देशेषु[3] तज्ज्ञेभ्यः(?) प्राप्नुयात् वधम्[4] ॥ १७५
यत् किञ्चित् परिहीनं स्यात् तत् पराजयलक्षणम् । परिवृद्धं च यत् किञ्चिद् दृश्यते विजयावहम् ॥ १७६
†दुर्वर्णाश्च दुर्गन्धाश्च कुवेषा व्याधिनस्तथा । ‡सेनाया ये नराश्च स्युः शस्त्रवध्या भवन्त्यथ ॥ १७७
¶तथाज्ञातप्ररूपेण राज्ञो जय-पराजयः(यौ) । विज्ञेयः(यौ) संप्रयातस्य भद्रबाहुवचो यथा ॥ १७८
परस्य विषयं[5] लब्ध्वा अग्निदग्धा[6] न लेपटेत् । परदारा न हिंस्येत[7] पशवः[8] पक्षिणस्तथा ॥ १७९
अग्नि[9]कृतेषु मध्यस्तु शस्त्रान्तरं निधापयेत् । निरापराधचित्तानि ना[10]ददीत[11] कदाचन ॥ १८०
देवतान् पूजयेद् वृद्धान्[12] लिङ्गस्थान् ब्राह्मणान्[13] गुरून्[14] । परिहारं नृपतिर्दद्या§द्धामाय तज्जिनाम्(?) ॥ १८१
राजवंशं[15] न[16] वोच्छिद्याद्[17] बाल-वृद्धांश्च[18] पण्डितान् । **न्यायेनार्थाः[19] समं दद्यात् तथा राज्येन[20] वर्धते[21] ॥ १८२
††धर्म्मोत्सवान् विवाहांश्च सुतानां कारयेद् बुधः । न चिरं धारयेत् कन्यां तथा धर्मेण वर्द्धते ॥ १८३
कार्याणि धर्मतः कुर्यात् पक्षपातं विसर्जयेत् । व्यसनैर्विप्रयुक्तश्च वचोत्सिक्त[22]सुखप्रदः[23] ॥ १८४
यथोचितानि सर्वाणि यथा न्यायेन[24] पश्यति[25] । राजा कीर्त्तिं समाप्नोति तदा प्रत्य[26]यमोदते ॥ १८५
इमं[27] यात्राविधिं कृत्स्नां योऽभिजानाति तत्त्वतः । न्यायतश्च प्रयुञ्जीत प्राप्नुयात्स[28] महत्[29] पदम्[30] ॥ १८६

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते यात्राविधिनाम त्रयोदशमोऽध्यायः ॥

---

अथातः संप्रवक्ष्यामि पूर्वकर्मविपाकजान् । सुभा-ऽशुभान् समुत्पातान् राज्ञो जनपदस्य च ॥ १
प्रकृतेर्यो विपर्यासः स उत्पातः प्रकीर्त्तितः । दिव्या-ऽन्तरिक्ष-भौमाश्च व्यासमेषां निबोधत ॥ २
यदात्युष्णं भवेच्छीते शीतमुष्णे तथा ऋतौ । तदा तु नवमे मासे दशमे वा भयं भवेत् ॥ ३
सप्ताहमष्टरात्रं च नवरात्रं दशान्हिकम्[31] । यदा नि[32]पतते वर्षं प्रधानस्य वधाय तत् ॥ ४
पक्षिणश्च यदा मत्ता पशवश्च पृथग्विधाः । विपर्ययेण संसक्ता विन्द्याज्जनपदे भयम् ॥ ५
आरण्या ग्राममायान्ति वनं गच्छन्ति नागराः । रुदन्ति चाथ जल्पन्ति तदाऽरण्याय कल्पते ॥ ६
अष्टादशस्य मासस्य तथा सप्तदश[33]स्य च । राजा च म्रियते यत्र भयं[34] रोग[35]श्च जायते ॥ ७
स्थिराणां कम्प[36]-सरणे चला[37]नामग[38]मेव हि[39] । ब्रूयात् तत्र वधं राज्ञः षण्मासात्पुत्रमन्त्रिणः ॥ ८
दर्पणे[40] हसते[41](ने) चापि क्रन्दनं[42] युद्धसंभवे । स्थावराणां वधं[43] विंद्यात्त्रिमासं[44] स्थावरात्मकम्[45] ॥ ९
पक्षिणः पशवो मर्त्याः प्रसूयन्ति विपर्ययैः । यदा तदा[46] तु षण्मासं भयं राजवधस्तदा ॥ १०

---

1 A B D हत° । 2 A D °मार्गे°; B °मग्रेन । * C This st. is not found in this Ms. 3 B missing in this Ms. 4 A कथम् । † C दर्भवर्णविदग्धश्च । ‡ °सेनायासेन पापेभ्यः शस्त्रमध्यभयं तथा ॥ ¶ A C तज्ञातप्रतिरूपेण । 5 A विषयो । 6 A °दग्धा । 7 A हिंसन्ते; B हिंसेन; C हिंसेत । 8 A तापसः । 9 B वर्ण° । 10 A मा । 11 C नावदीन । 12 C नित्यं । 13–14 C धर्म्मचारिणम् । § B °दग्धमयज़िरं; C विससृजेर्गयं; D दग्धामपेज्जिनस् । 15–16 C राजवंशेन । 17 C वाच्छिद्यात् । 18 C बाल–वृद्धैश्च । ** C ज्ञानार्थात्मसमादाय । 19 A व्यापेतार्था । 20 A राज्ञे न । 21 A वर्तते; C राज्ञेन । †† C This and the following stanza are missing in this Ms. 22 A तवोत्सिक्त; B C वचोत्सिक्त° । 23 A °सुखप्रभः । 24 A ज्ञायेत । 25 A सर्प्पति । 26 A प्रेत्य°; C प्रीत्येह; D प्रेत्या च । 27 A इयं । 28 A प्राप्नुयास्तु । 29 B सुमहद्वसुम्; C कीर्तिमुत्तमम् । 30 A वसुम् । 31 A दशरात्रिकम् । 32 A न । 33 A सप्त° । 34 C भङ्गं । 35 C राष्ट्रस्य । 36 A कम्पते । 37 A चपलानां । 38 A नगे । 39 A चले । 40 B दर्प्पणे; C सर्पेण । 41 A B D हसते; C सहता । 42 A क्रंदते; B क्रंदतो; C कुंदत । 43 C भयं । 44 A नृमासं । 45 C नात्र संशयः । 46 C missing in this Ms.

विकृतैः[1] पाणि-पादाद्यैर्न्यूनैश्चाप्यधिकैस्तथा[3] । यदा त्वेते[4] प्रसूयन्ति क्षुद्भयानि तदादिशेत् ॥ ११

षण्मासं द्विगुणं चापि परं वाथ चतुर्गुणम् । राजा च[5] म्रियते तत्र भयानि च न संशयः ॥ १२

मद्यानि रुधिरा-ऽस्थीनि धान्या-ऽङ्गार-वसास्तथा[6] । *मेघो[7] वा[8] वर्षते यत्र भयं विद्याच्चतुर्विधम् ॥ १३

प्रसर्पन्ति[9] जलचराः पक्षिणो द्विपदास्तथा । वर्षमाणो जलं[10] हन्याद्[11] भयमाख्याति दारुणम् ॥ १४

निरिन्धनो[12] यदा[13] चाग्निरीक्ष्यते[14] सततं पुरे । स राजा नश्यते देशाच्छण्मासात् परतस्तदा ॥ १५

दीप्यन्ते यत्र शस्त्राणि वस्त्राण्यश्वा नरा गजाः । वर्षे च म्रियते राजा देशस्य च महद्भयम् ॥ १६

चैत्य[15]वृक्षरसा यद्वत् प्रभवन्ति विपर्ययात् । समस्ता यदि वा व्यस्तास्तदा विन्द्याद् भयागमम् ॥ १७

दधि क्षौद्रं घृतं[16] तोयं[17] दुग्धं[18] रेत[19]विसिश्रितम्[20] । निश्रवंति यदा वृक्षास्तदा व्याधिभयं विदुः ॥ १८

†रक्ते[21] शस्त्र[22]भयं वक्ष्ये नीले[23] श्रेष्टि[24]भयं विदुः । ‡अन्येष्वेषु विचित्रेषु वृक्षेषु तु भयं विदुः ॥ १९

§विस्वरं रवमानस्तु चैत्यवृक्षो यतः पतेत् । ततो भयं समाख्याति देशजं[25] पञ्चमासिकम् ॥ २०

नानावस्त्रैः समाच्छन्ना यदा दृश्यन्ते वै[26] द्रुमाः[27] । राष्ट्रजं तद् भयं विन्द्याद् विशेषेण तदा विषे[28] ॥ २१

शुक्लवस्त्रो द्विजान् हन्ति रक्तैः[29] क्षत्रं[30] तदाश्रयम् । पीतवस्त्रो यदा व्याधिं तदा च वैश्यघातकः ॥ २२

नीलवस्त्रो निहन्त्याशु शूद्रांश्च[31] प्रभृतिन्नरान्[32] । पशु-पक्षिभयं चित्रं विवर्णः[33] [34]स्त्रीभयङ्करः ॥ २३

मधुराः क्षीरवृक्षाश्च श्वेत[35]पुष्प-फलास्तु ये । सौम्यायां[36] दिशि यज्ञार्थं[37] जानीयात्[38] प्रतिपुद्गलाः ॥ २४

कषायमधुरा[39]स्तिक्ता[40] उष्णवीर्यविलासिनः[41] । रक्तपुष्प-फलाः प्राच्यां सुदी[42]र्घनृ[43]प-क्षत्रयोः[44] ॥ २५

अम्ला[45]ः सलवणाः स्निग्धाः पीतपुष्प-फलाश्च ये । ¶दक्षिणां दिशि विज्ञेया वैश्यानां प्रतिपुद्गलाः ॥ २६

कटु-कण्टकिनो रूक्षाः[46] कृष्ण[47]पुष्प-फलाश्च ये । वारुण्यां दिशि[48] वृक्षाः स्युः शूद्राणां प्रति पुद्गलाः ॥ २७

महान्तश्चतुरश्राश्च स्वगाहाश्च वै[49]रोषिताः । वनमध्ये स्थिताः सन्तः स्थावराः प्रतिपुद्गलाः ॥ २८

ह्रस्वाश्च तरवो येऽन्ये अंत्ये जाता वनस्य च । अचिरोद्भवकारा ये यायिनां प्रतिपुद्गलाः ॥ २९

ये विदिक्षु विमिश्राश्च[50] विकर्मसु[51] विजातिषु[52] । **पुद्गलाश्च तु ये येषां ते तेषां प्रतिपुद्गलाः ॥ ३०

श्वेतो राजा[53] द्विजान् हन्ति रक्तः क्षत्र-नृपान् वदेत् । पीता वैश्यविनाशाय कृष्णः शूद्रनिषूदये[54] ॥ ३१

---

1 A B विकृतिः । 2 A च्यूतैः । 3 A थविकैः । 4 C एतेषु । 5 A वस्ति । 6 C मधु । * B This line and the succeeding line are missing in this Ms. 7–8 C मेघवान् । 9 C सरीसृपा । 10–11 C जलादन्यं । 12 A निरुन्धते । 13 A missing in this Ms. 14 A ईक्षते; C दीप्यते । 15 C चित्र° । 16 A मूतं । 17 C दुग्धं । 18 C धि° । 19 C °वर्ण° । 20 C °गतिमिश्रकं । † C This appears as 27th stanza in C. 21 C राज्ञो । 22 C पुत्र° । 23 A नीरे । 24 A राष्ट्र°; B D श्रेष्ठ° । ‡ A B D विथो भेदं च मन्दे च वृक्षा येषु न संशयः ॥ § C This st. appears in C as 26 th stanza. 25 D दशजं । 26 A ते । 27 C तद्रसाः । 28 A विजोः; C धियो । 29 C द्विजान् हन्ति is twice written here. 30 D क्षेत्रं । 31 A समुद्रान् । 32 C तदा भृतिकरान्नरान् । 33 A B विवर्ण° । 34 C तु । 35 C कृष्ण° । 36 C उदीच्यां । 37 C दृश्यंते । 38 C द्विजानां । 39 A B D °मन्द° । 40 A B D °मधुराः । 41 A B D °विशालता । 42–44 C कृत्तिकायां विवर्द्धयेत् । 45 C D श्वात्माः । ¶ B This and the next line are missing in this Ms. A D दक्षिणस्यां न वाय्वुष्णं । 46 C D वृक्षाः । 47 C श्वेत° । 48 C प्राति । 49 C चिरो° । 50 A विनिम्नाश्च । 51 A D विकर्म्म° । 52 A °प्रविजाकृति; B प्रविजायति । ** C प्रतिपुद्गलाश्च येषां तेषामुत्पातजं फलम् ॥ 53 A रजो; B रिजे; D रिजो । 54 A D स्तु सूयत; B स्तु सूचयेत् ।

परचक्रं नृपभयं क्षुधा-व्याधि-धन[1]क्षयम् । एवं लक्षणसंयुक्ताः स्रावाः कुर्युर्महद्भयम् ॥ ३२
कीटदष्टस्य[2] वृक्षस्य व्याधितस्य च यो रसः । विवर्णः[3] स्रवते[4] गन्धं[5] न दोषाय स कल्पते ॥ ३३
वृद्धा द्रुमा निहन्त्यार्शु[6] मरणे पर्युपस्थिताः । ऊर्द्ध्वाः शुष्का भवन्त्येते[7] तस्मात् तांल्लक्षयेद्बुधः ॥ ३४
यथा[8] वृद्धो[9] नरः[10] कश्चित् प्राप्य हेतुं विनश्यति । *तथा वृद्धो द्रुमः कश्चित् प्राप्य हेतुं विनश्यति ॥ ३५
इतरे-तरयोगास्तु †वृक्षादिवर्णनामभिः । ‡वृद्धा-चलो-ग्रमूलाश्च चलच्छैर्याश्च साधयेत् ॥ ३६
हसने[11] रोदने[12] नृत्ये[13] देवतानां प्रसर्पणे । महद्भयं विजानीयात् षण्मासात्रिगुणो[14](णं) परम् ॥ ३७
§चित्राश्चर्यसुलिङ्गानि निमीलन्ति वदन्ति[15] वा । ज्वलन्ति[16] च[17] विगन्धीनि भयं राजवधोद्भवम् ॥ ३८
तोय-धान्यानि सहसा रुदन्ति च हसन्ति च । मार्जारवच्च वासंति[18][19] तत्र विन्द्याद् महद्भयम् ॥ ३९
वादित्रशब्दाः श्रूयंते[20] देशे यस्मिन्न मानुषैः । स देशो राजदण्डेन[21] पीड्यते नात्र संशयः ॥ ४०
तोय-धान्यानि[22] सर्वाणि वहन्ति रुधिरं यदा । षष्ठे मासे समुद्भूते संग्रामः शोणिताकुलः ॥ ४१
चिरस्थायीनि[23] तोयानि तूर्णं यान्ति पयःक्षयम्[24] । गच्छन्ति वा प्रतिस्रोतः[25] परचक्रागमस्तदा ॥ ४२
वर्धन्ते[26] चापि शीर्यन्ते चलन्ते वा तदाश्रयात्[27] । सशोणितानि दृश्यन्ते यत्र तत्र महद्भयम् ॥ ४३
शस्त्र[28]कोशात् प्रधावन्ते[29] नदन्ति[30] विचरन्ति वा । यदा रुदन्ति[31] दीप्यन्ति संग्रामस्तेषु निर्दिशेत् ॥ ४४
¶यानानि वृक्ष-वेश्मानि धूमायंति ज्वलंति वा । अकालजं फलं पुष्पं तत्र मुख्यो विनश्यति ॥ ४५
भवने यदि श्रूयंते[32] गीत-वादित्रनिस्वनाः । यस्य तद्भवनं तस्य शारीरं जायते भयम् ॥ ४६
¶पुष्पे पुष्पं[33] फले[34] पुष्पं[35] फले वा[36] विफलं[37] यदा । ‖बध्यते वितथं विन्द्यात्तथा जनपदे भयम् ॥ ४७
चतुःपदानां सर्वेषां मनुजानां यदाऽम्बरे[38] । श्रूयते[39] व्याहृतं[40] घोरं तदा मुख्यो विपद्यते[41] ॥ ४८
निर्घाते कम्पने[42] भूमौ[43] शुष्कवृक्षप्ररोहणे[44] । देशपीडां[45] विजानीयान्मुख्यश्चात्र न जीवति ॥ ४९
**स्थिरा[45] भूमिं प्रयातस्य यदा सुद्रवतां व्रजेत् । निमज्जन्ति च[46] चक्राणि तस्य विन्द्यात् महद् भयम् ॥ ५०
वल्मीकस्या[47]शु[48] जनने मनुजस्य[49] निवेशने । अरण्यं विशतश्चैव[50] तत्र विंद्यान्महद् भयम् ॥ ५१
††महापिपीलिकावृन्दं संद्रकाभ्रत्य(?)विप्लुतम् । तत्र तत्र च सर्वं तद्राष्ट्रभङ्गस्य चादिशेत् ॥ ५२

---

1 A D °जन° । 2 B D °दग्धस्य । 3 A विवर्ण° । 4 A missing in this Ms. 5 A गगनं । 6 C श्रवंति । 7 A त चेद्धा ते । 8 C यथा । 9 A छन्दो; B छेदः । 10 A नरम् । * A This second half is missing in A but as it fits in with the context and as it is found in B C D it is placed there. † A B D वृद्धादिश्च वर्णना यत् । ‡ A B D वृक्षा बाले तु सूक्ष्माश्च वमाणा उल्काश्च साधयेत् । 11 A B D हसते । 12 A B D रोदते । 13 A B D सिलं । 14 A B D नृगुणात् । § C चित्राश्वर्धासु निंगानि । 15 C missing in this Ms. 16–17 A कुलं भावे । 18–19 C पश्यंते । 20 A पूर्वेता । 21 A दांडुन । 22 A B D तोयावहानि । 23 A D °स्थानानि । 24 C तदा जयं । 25 C अतिशोभं । 26 C वध्यंते । 27 A D प्रयेत्; B दर्पयेत् । 28 C शास्त्रन्वैषा; दाश्रकोसा । 29 C प्रवर्धन्ते । 30 A नन्दन्ति; C निर्दंति । 31 A C D रुहंति । § A This st. is missing in A bnt as it is found in B C D it has been incorporated in the text. 32 A तूर्यन्ते; D स्त्रयंते । ¶ D This is found in this Ms. as the 51st st. 33 A पुष्पे । 34 A फलं; C यदा । 35 A वाऽपि; C कश्चित् । 36 A वाऽपि । 37 A फलं । ‖ C भयं जनपदं विंद्यात् भद्रबाहुवचो यथा ॥ 38 A वरे; B D त्वरे । 39 A स्तूयतेऽथा । 40 C व्याधयः । 41 C विनश्यते । 42 A कम्पते; B D कंदने । 43 A B भूमि; D भूमिः । 44 A शुष्क°; B शुक्र । 45 D दोस° । ** C In place of this st. the following st. is found in C:– यदा भूधरशृङ्गाणि निपतन्ति महीतले । तदा राष्ट्रभयं विंद्यात् भद्रबाहुवचो यथा ॥ 46 A not found in this Ms. 47 A वल्मीकस्य । 48 A सुजनने; B C °स्यासु° । 49 A तु जस्य । 50 A व्यनेनैव; B वसने; D वासने । †† D This is not found in this Ms.

महापिपीलिकाराशिर्विस्फुरंतो विपद्यते । उद्यानुत्तिष्ठते यत्र तत्र विद्यान्महद्भयम् ॥ ५३

श्वश्वपिपीलिकावृन्दं निम्नमूर्द्धं विसर्पति । वर्षं तत्र विजानीयाद्भद्रबाहुवचो यथा ॥ ५४

*राज्ञो(जो)पकरणे भग्ने[1] चलिते पातितेऽपि[2] वा[3] । क्रव्यादसेवने चैव राजपीडां समादिशेत् ॥ ५५

वाजि-वारण-यानानां मरणे छेदने द्रुते । परचक्रागमं विंद्यादुत्पातज्ञो जितेन्द्रियः ॥ ५६

क्षत्रियाः पुष्पितेऽश्वत्थे[4] ब्राह्मणाश्चाप्युदुम्बरे । वैश्याः प्लक्षेऽथ पीड्यन्ते न्यग्रोधे शूद्र-दस्यवः[5] ॥ ५७

इन्द्रायुधं[6] निशिश्वेतं[7] विप्रान् रक्तं च क्षत्रियान् । निहन्ति पीतकं वैश्यान् कृष्णं शूद्रभयङ्करम् ॥ ५८

भज्यते नश्यते तत्तु कम्पते शीर्यते जलम् । चतुर्मासं परं राजा म्रियते भज्यते तदा ॥ ५९

पितामहेषु[8] सर्वेषु[9] धर्मवेन्द्रकृतं जलम् । त्रैमासिकं विजानीयादुत्पातं ब्राह्मणेषु तम् ॥ ६०

रूक्षा विवर्णा विकृता यदा सन्ध्या भयानका । मारीं कुर्युः सुविकृतां पक्ष[10]-त्रिपक्षकं[11] भयम्[12] ॥ ६१

यदा वैश्रवणे[13] गमने कश्चिदुत्पातः समुदीर्यते । राजानश्च सचिवांश्च[14] पञ्चमासान् स पीडयेत् ॥ ६२

यदोत्पातोऽयमेकश्चिद्दृश्यते विकृतः[15] क्वचित् । तदा व्याधिश्च मारी च चतुर्मासात् परं भवेत् ॥ ६३

यदा चन्द्रे वरुणे वोत्पातः कश्चिदुदीर्यते । §मरकः सिन्धु-सौवीर-सुराष्ट्र-वत्सभूमिषु ॥ ६४

भोजेषु[16] च भयं विंद्यात्[17] पूर्वे[18] च[19] म्रियते नृपः । पञ्चमासात् परं विंद्याद् भयं घोरमुपस्थितम् ॥ ६५

रुद्रे[20] च वरुणे कश्चिदुत्पातः[21] समुदीर्यते । सप्तपक्षं भयं[22] विंद्याद् ब्राह्मणानां न संशयः ॥ ६६

इन्द्रस्य प्रतिमायां तु यद्युत्पातः प्रदृश्यते । सङ्ग्रामे त्रिषु मासेषु राज्ञः सेनापतेर्वधः ॥ ६७

यद्युत्पातो बलन्देवे[23] तस्योपकरणेषु च । महाराष्ट्रान् महायोद्धान् सप्त मासान् प्रपीडयेत् ॥ ६८

वासुदेवे यद्युत्पातस्तस्योपकरणेषु च । चक्रारूढाः प्रजा ज्ञेयाश्चतुर्मासान्[24] वधो[25] नृपे[26] ॥ ६९

प्रद्युम्ने[27] वा[28]ऽथ उत्पातो गणिकानां भयावहः । ||विशालायां च द्रष्टव्यं ¶भयं चेद्वाऽष्टमासिकम् ॥ ७०

यदार्यप्रतिमायां तु किञ्चिदुत्पातजं भवेत् । चौरा मासा त्रिपक्षाद्वा[29] $विलीयन्ति रजन्ति वा ॥ ७१

यद्युत्पातः श्रियाः[30] कश्चित् त्रिमासात्[31]कुरुते फलम् । वणिजां पुष्प-बीजानां **वनिता-लेख्यजीविनाम् ॥ ७२

वीरस्थाने श्मशाने च यद्युत्पातः समीयते[32] ।
चतुर्मासान् क्षुधा-मारी[33] पीड्यन्ते व्रतनिश्चये[34](व्रतिनश्च ये) ॥ ७३

यद्युत्पातः(ताः) प्रदृश्यते(यंते) विश्वकर्मणि(र्माण)माश्रितः(ताः) ।
पीड्यन्ते शिल्पिनः सर्वे पञ्चमासात्परं[35] भयम् ॥ ७४

---

* These three sts. are not found in A B D but as they have got fitting context they have been embodied in the text. 1 B after भग्ने, दग्धे is found in this Ms. 2–3 A B these two words are missing in these Mss. 4 A स्वस्थे; B D श्वत्थे । 5 C °दासकः । 6 C इन्द्रियायुध । 7 C निश्वेतं । † C This is droppod in C. Therefore the first half of the succeeding st. forms the second half of every preceding st. in C. 8 C पिता-महर्षि° । 9 C °सोमेषु । ‡ C धर्म्मदेशे तथा तले । 10 वर्षान्ते पक्षिकं । 11 B D वर्ष° । 12 C परम् । 13 A वै गमणे । 14 A it is not found in this Ms. 15 C च ततः । § A B D तारकेषु तु हारेषु सराष्ट्रवत् सभूमिषु ॥ 16 A B D भोजनेषु । 17 A B D तत्र । 18–19 A B D सर्वेषु । 20 A चन्द्रे; B सद्रे; D साद्रे । 21 A उत्पादः । 22 C फलं । 23 C वले कश्चिन् । 24 C सर्वे । 25 C परी भयम् । 26 A भवेत् । 27–28 C प्रक्वचित्तु । || A विशीलां चैव दृष्टश्च; B D विशीलां चैव दृष्टश्च । ¶ A B D सर्वां दुष्टस्य मासिकः । 29 A नृपक्षाय । $ C पीड्यन्ते नात्र संशयः । 30 A श्रियः । 31 C मासात् । ** C तथा लेख्योपजीविनाम् । 32 C समीहते । 33 C °चर्यां । 34 A व्रतिश्च ये; B कृतनिश्चयः । 35 A B D °मासातुरं ।

भद्रष्टाली विकुर्वन्ति(न्ती) स्त्रियो[1] हन्तीह[2] सुव्रताः[3] । आत्मानं वृत्तिनो ये च[4] षण्मासात् पीडयेत् प्रजाम्[5] ॥ ७५
इन्द्राण्याः[6] समुत्पातः[7] कुमार्यः(रीः) परिपीडयेत् । त्रिपक्षाद[8]क्षिरोगेण कुक्षि-कर्ण-शिरोज्वरैः ॥ ७६
धन्वन्तरे समुत्पातो वैद्यानां[9] स भयङ्करः । षाण्मासिकविकारांश्च रोगजान् जनयेन्नृणाम् ॥ ७७
जामदग्न्ये[10](ग्न्ये) यदा[11] रामे[12] विकारः कश्चिदीर्यते । तापसांश्च तपाढ्यांश्च[13] त्रिपक्षेण[14] जिघांसति ॥ ७८
पञ्चविंशतिरात्रेण कवन्धं यदि दृश्यते । सन्ध्यायां भयमाख्याति महापुरुषविद्रवम् ॥ ७९
सुलसायां[15] यदोत्पातः षण्मासं सर्पिजीविनः । पीडयेद् गरुडे[16] यस्य[17] वासुकास्तिकैर्भक्तिषु[18] ॥ ८०
भूतेषु[19] यः[20] समुत्पातः[21] सदेव[22]परिवारिकैः[23] । मासेन पीडयेत्तूर्णं निर्ग्रन्थवचनं यथा ॥ ८१
अर्हत्सु[24] वरुणे[25] रुद्रे[26] गृहे[27] शुक्रे[28] नृपे[29] भवेत्[30] । पञ्चाल-गुरु-शुक्रेषु[31] पावकेषु पुरोहिते[32] ॥ ८२
वाते[33]ऽग्नौ[34] वासुभद्रे च विश्वकर्म-प्रजापतौ । सर्वस्य तद् विजानीयात् वक्ष्ये[35] सामान्यजं फलम्[36] ॥ ८३
चन्द्रस्य वरुणस्यापि रुद्रस्य च वधूषु च । स महाराजसूत्पातो राजाग्रमहिषीषु च ॥ ८४
एका[37] यस्य[38] यदा[39] भार्या या चान्यः केवलाः[40] स्त्रियः[41] । कुर्वन्ति किञ्चिद् विकृतं प्रधानस्त्रीषु तद्भयम् ॥ ८५
एवं देशे च जातौ च कुले[42] पाखण्डि[43]-भैक्षिषु[44] । तज्जातिप्रतिरूपेण स्वैः स्वैर्देवैः शुभं वदेत् ॥ ८६
उद्गच्छमानः सविता पूर्वतो विकृतो[45] यदा । स्थावरस्य विनाशाय पृष्ठतो यायिनाशनः ॥ ८७
हेमवर्णः सुतोयाय[46] मधुवर्णो भयङ्करः । शुक्ले च सूर्यवर्णेऽस्मिन् सुभिक्षं क्षेममेव च ॥ ८८
हेमन्ते शिशिरे रक्तः पीतो ग्रीष्म-वसन्तयोः । वर्षासु शरदि शुक्लो विपरीतो भयङ्करः ॥ ८९
दक्षिणे चन्द्रशृङ्गे तु यदा तिष्ठति भार्गवः । अभ्युत्क(ग)तं[47] तदा राजा बलं हन्या[48]त्[49]सपार्थिवः[50] ॥ ९०
चन्द्रशृङ्गे यदा भौमस्तिष्ठते[51] विकृतो[52] भृशम् । प्रजास्तत्र विपद्यन्ते कुर्वैः[53] पार्थिवाश्चलाः ॥ ९१
शनैश्चरो यदा सौम्य[54]शृङ्गे[55] पर्युपतिष्ठति । तदा वृष्टिभयं घोरं दुर्भिक्षं प्रकरोति च ॥ ९२
भिनत्ति सोमं मध्येन ग्रहेष्वन्यतमो यदा । तदा राजभयं[56] विन्द्यात् प्रजा[57]क्षोभं च दारुणम् ॥ ९३
राहुणा गृह्यते चन्द्रो यस्य नक्षत्रजन्मनि । रोगं मृत्युभयं वाऽपि तस्य कुर्यान्न संशयः ॥ ९४
क्रूरग्रहयुत[58]श्चन्द्रो गृह्यते दृश्यते[59]ऽपि[60] वा[61] । तदा क्षुभ्यन्ति सामन्ता राजा[62] राष्ट्रं च पीड्यते ॥ ९५
लिखेत[63] सोमः शृङ्गेन भौमं[64] शुक्रं गुरुं यथा । शनैश्चरं[65] चाधिकृतं षड् भयानि तदा दिशेत् ॥ ९६

---

1 A स्नृहा; D नृहा । 2 B अर्हन्ती । 3 C सुव्रतं । * C अन्याश्च प्रतिमा कश्चित् षड्भिर्मासैः प्रदीपयेत् ॥ 4 A व्रतिवीराश्च । 5 B व्रजम्; D प्रजम् । 6 A B D इन्द्रान्यायः । 7 C स उत्पातः । 8 A नृपक्ष्य; C नृपक्षाद् । 9 A विद्यानाम् । 10 B यामदग्ध; C यामदग्नेय; D यामदग्धे । 11–12 C आरामे । 13 B तपाद्यांश्च; C तपोद्याश्च; D तपाद्यांते । 14 A नृ° । 15 A सलसायां; B झुलमायां; D सलभायाम् । 16–17 C गरुडायांश्च । 18 C वास्तुकैर्मृग- । 19 A B D भूते । 20–21 A B D यस्या यदुत्पातः । 22 A सदैव । 23 A B परिचारिकः; C परिवारकः । 24 C अरुणात् । 25 B D वरुणेन्द्र° । 26 B D °भद्रे । 27 A ग्रहे; C शक्रे । 28 A शुक्रे । 29–30 C व्याधिभयं भवेत् । 31 A °काशुके; B °सुषु । 32 A B D पुरोहितः । 33–34 A B D वाताग्नौ । 35 C राज्य° । 36 C भयम् । † C This and the following stanza are not found in this Ms. 37–39 A चेणकायस्पदा । 40–41 D केवलस्तु यः । 42 C कले । 43 A D पाखंड° । 44 A C °भिक्षिषु । 45 C विश्वतो । 46 C सुदीसोय । 47 B अप्फ; C अभ्यन्तरे; D अभ्युक्षतं । 48 C दलैः । 49–50 C हन्यमसंशयः । 51 A B D तिष्ठति । 52 A B C अविकृतः । 53 A C कुरुवः । 54 C शृंगे । 55 C भौमः । 56 A सभयं; C राजवधं । 57 C राष्ट्र° । 58 A B D यदा स गृह्यते । 59–61 C सर्वतो भृशम् । 62 C राज । 63 A B D लिखते । 64 A B D सोमं । 65 B शनैश्चरो ।

*यदा बृहस्पतिः शुक्रं भिद्येदथ विशेषतः । †पुरोहितास्तदाऽमात्याः प्राप्नुवन्ति महद्भयम् ॥ ९७
ग्रहाः परस्परं यत्र भिन्दन्ति प्रविशन्ति वा । तत्र शस्त्र[1]वाणिज्यानि विन्द्यादर्थविपर्ययम्[2] ॥ ९८
स्वतो ग्रहमन्यं श्वेतं प्रविशेत लिखेत् तदा । ब्राह्मणानां मिथो भेदं मिथःपीडां विनिर्दिशेत् ॥ ९९
एवं शेषेषु वर्णेषु स्ववर्णैश्चारयेद् ग्रहः । वर्णतः स्वभयानि स्युस्तद्युतान्युपलक्षयेत् ॥ १००
श्वेतो ग्रहो यदा पीतो रक्तकृष्णोऽथवा भवेत् । [3]स्ववर्णविजयं कुर्यात् यथास्वं वर्णशङ्करम्[4] ॥ १०१
उत्पाता विविधा ये तु ग्रहाऽऽघाताश्च दारुणाः । उत्तराः सर्वभूतानां दक्षिणा मृगशृङ्गिणाम् ॥ १०२
करङ्कं[5] शोणितं[6] मांसं विद्युतश्च[7] भयं वदेत् । दुर्भिक्षं जनमारिं च शीघ्रमाख्यान्त्युपस्थितम् ॥ १०३
शब्देन महता भूमिर्यदा रसति[8] कम्पते । सेनापतिरमात्यश्च राजा राष्ट्रं च पीड्यते ॥ १०४
फले फलं यदा किञ्चित् पुष्पे पुष्पं च दृश्यते । गर्भाः पतन्ति नारीणां युवराजा च वध्यते ॥ १०५
नर्तनं जल्पनं[9] हासमुत्कीलनं[10]-निमीलने । दिवा यत्र प्रकुर्वन्ति तत्र विन्द्यान्महद्भयम् ॥ १०६
‡पिशाचा यत्र दृश्यन्ते देशेषु नगरेषु वा । अन्यराजा भवेत्तत्र प्रजानां च महद्भयम् ॥ १०७
भूमिर्यत्र[11] नभो[12] याति विशति[13] वसुधां[14] जलम् । दृश्यन्ते वाऽम्बरे देवास्तदा राजवधो ध्रुवम् ॥ १०८
धूम-ज्वालां रजो भस्म[15] यदा मुञ्चंति देवताः । तदा तु म्रियते राजा मूल[16]तस्तु[17] जनक्षयः ॥ १०९
मृग-पक्षि[18]-पशूनां च भाषणे ज्वलने गमे । जनक्षयाः प्रभूतास्तु विकृते वा नृपवधः ॥ ११०
$विकृताकृति-संस्थाना जायन्ते यत्र मानवाः । §तत्र राजवधो ज्ञेयो विकृतेन मुखेन वा ॥ १११
वधः सेनापतेश्चापि[19] भयं दुर्भिक्षमेव च । अग्निर्वा[20] ह्यथवा[21] वृष्टिस्तदा स्यान्नात्र संशयः ॥ ११२
द्वारं शस्त्रगृहं[22] वेश्म राज्ञो देवगृहं तथा । धूमायन्ते यदा राज्ञस्तदा मरणमादिशेत् ॥ ११३
||परिघा[23]ऽर्गला[24] कपाटं द्वारं रुन्धन्ति वा स्वयम् । पुररोधस्तदा विन्द्यान्नैगमानां महद्भयम् ॥ ११४
यदा द्वारेण नगरं शिवा प्रविशते दिवा । वास्यमाना विकृता वा तदा राजवधो ध्रुवम् ॥ ११५
¶अन्तःपुरेषु द्वारेषु विष्णुमित्रे(तीर्थे) तथा पुरे । अट्टालकेऽथ हट्टेषु मधु लीनं विनाशयेत् ॥ ११६
धूमकेतुहतं मार्गं शुक्रश्चरति वै यदा । तदा तु सप्त वर्षाणि महान्तमनयं वदेत् ॥ ११७
गुरुणा प्रहतं मार्गं यदा भौमः प्रपद्यते । **भयं स(सा)र्वजनिकं करोति बहुधा नृणाम् ॥ ११८
भौमेनापि हतं मार्गं यदा[25] सौरिः[26] प्रपद्यते[27] । तदाऽपि शूद्र-चौराणामनयं[28] कुरुते नृणाम् ॥ ११९
सौरेण तु हतं मार्गं वाचस्सं[29](वाचस्पतिः) प्रपद्यते[30] । भयं सर्वजनानां तु करोति बहुधा तदा ॥ १२०
‡‡राजदीपो निपतते भ्रश्यतेऽधः कदाचन । षण्मासात्पञ्चमासाद्वा नृपमन्यं[31] निवेदयेत् ॥ १२१

---

* C this is missing in C. † B This second half is not found in this Ms. 1 C शास्त्र° । 2 A B D °विवर्धनम् । 3 A सुवर्ण° । 4 A स्वर्णसंकरम्; C स्वं चार्य शंकरम्; D सुवर्णशंकरम् । 5 B C D करंक । 6 A B D प्राणितं । 7 A C D विकृताश्च । 8 A रसवि । 9 A B D जलनं । 10 C सम्मीलन । ‡ this is not found in A B D. 11 A सूर्युं च । 11–12 C नभयं भूमिमा° । 13 A C D विंशति । 14 A वपु च; B वपुषं; D वपुवं । 15 A यस्य । 16–17 C घोरश्चैव । 18 C स्थिरमास° । $ A B D सत्यं जना सदं वा च । § C पीडा तत्र प्रजानां च विकृते तु नृपो वधः ॥ 19 A B D राज्ञः । 20–21 A वंह्विर्यथा । 22 A °भयं । || C missing in this Ms. 23–24 A परिसार्यंला । ¶ C this st. is found with some variations in the following manner in this Ms:–गृहे अन्तःपुरे द्वारे मंडे गोपुरोद्भवः । अट्टालकेष्वथागेषु मधु लीनं न शोभनम् ** C क्षत्रियाणां बहुविधं तदाऽपि भयमादिशेत् ॥ 25–26 A वावस्सं । 27 A प्रतिपद्यते । 28 D अन्नक्षयं । 29 B चोभयं; C यदा सौरिः; D चावश्यं । 30 A B D प्रतिपद्यते । ‡‡ A B D राजाप्रदीपो नृपतेर्भज्यते वा कदाचन । 31 C °मृत्युं ।

निर्जीवाभाषणे हासे जलरोवे[1] प्रधावने । जातमात्रस्य तु शिशोः सुमहद्भयमादिशेत् ॥ १२२
निवर्तते[2] यदा छाया परिग्रस्ता[3] जलाश्रयात् । प्रदृश्यते च दैत्यानां[4] सुमहद्भयलक्षणम् ॥ १२३
*द्वारे द्वारकरणं कृतस्य च विनाशनम् । हृतस्य ग्रहणं वाऽपि तदा ह्युत्पातलक्षणम् ॥ १२४
यजने छादनं यस्य ज्वलिताङ्गमथाऽपि वा । स्पंदते वा स्थिरं किञ्चित् †कुलहानिं तदाऽऽदिशेत् ॥ १२५
दैवज्ञा भिक्षवः प्राज्ञाः साधवश्च पृथग्विधाः । परित्यजन्ति तं देशं ध्रुवमन्यत्र शोभनम् ॥ १२६
युद्धानि कलहा बाधा विरोधा-ऽरिविवृद्धयः । अभीक्ष्णं यत्र वर्तन्ते तं देशं परिवर्जयेत् ॥ १२७
विपरीता यदा छाया दृश्यन्ते वृक्ष-वेश्मनि । यदा ग्रामे पुरे वाऽपि प्रधानवधमादिशेत् ॥ १२८
‡महावृक्षो यदा शाखामुत्करां[5] मुञ्चते द्रुतम् । भोजकस्य वधं विन्द्यात् सर्पाणां वधमादिशेत् ॥ १२९
पांशुवृष्टिस्तथोल्का[6] च निर्घाताश्च सुदारुणाः । यदा पतन्ति युगपद् घ्नन्ति राष्ट्रं सनायकम् ॥ १३०
रसाश्च विरसा यत्र नायकस्य[7] च दूषणम् । तुलामानस्य[8] ह्रसनं राष्ट्रनाशाय तद्भवेत् ॥ १३१
शुक्लप्रतिपदि चन्द्रे समं भवति मण्डलम् । भयंकरं तदा तस्य नृपस्याथ न संशयः ॥ १३२
समाभ्यां यदि शृङ्गाभ्यां यदा दृश्येत चन्द्रमाः । धान्यं भवेत्[9] तदा[10] न्यूनं[11] मन्दवृष्टिं विनिर्दिशेत् ॥ १३३
वामशृङ्गं यदा वा स्यादुन्नतं दृश्यते भृशम् । तदा सृजति लोकस्य ¶दारुणत्वं न संशयः ॥ १३४
ऊर्ध्वस्थितं नृणां पापं तिर्यक्स्थं राजमन्त्रिणाम् । अधोगतं च वसुधां सर्वां हन्यादसंशयम् ॥ १३५
शस्त्रं रक्ते भयं पीते धूम्रे दुर्भिक्षविद्रवे । चन्द्रे तदोदिते ज्ञेयं भद्रबाहुवचो यथा ॥ १३६
दक्षिणात्परतो दृष्टं चोरदूतं[12] भयङ्करम् । अपरे तोयजीवानां ‖वायव्ये हन्ति वै[13] गर्दभम्[14] ॥ १३७
शस्त्र-कीटेषु बालेषु विवादेषु च लिङ्गिषु । वाहनेषु च दृष्टेषु विन्द्याद्भयमुपस्थितम् ॥ १३८
ऊर्ध्वं वृषो[15] यदा नर्देत्[16] तदा स्याच्च भयङ्करः । ककुदं[17] चलते[18] वापि तदाऽपि स भयङ्करः ॥ १३९
व्याधयः प्रबला[19] यत्र माल्य(यं)गन्धं[20] न वायते[21] । $आहूतिपूर्णकुम्भाश्च विनश्यन्ति भयं वदेत् ॥ १४०
नववस्त्रं[22] प्रसङ्गेन[23] ज्वलते[24] मधुरां[25] गिरा[26] । अरुन्धतीं[27] न पश्येत स्वदेहं यदि दर्पणे ॥ १४१
न पश्यति स्वकार्याणि **परकार्यविशारदः । मैथुने यो निरक्तश्च न च सेवति मैथुनम् ॥ १४२
न मित्रचित्तो[28] भूतेषु[29] स्त्री वृद्धं सेवते[30] शिशुम् । विपरीतश्च सर्वत्र सर्वदा स भयावहः ॥ १४३
अभीक्ष्णं पापस्वप्नस्य(श्च) निरुत्साहो विचिन्तितः[31] । अलक्ष्मीपूर्णो[32] न[33] चिरात्[34] प्राप्नोति स महद्भयम् ॥ १४४
क्रव्यादाः शकुना यत्र बहुशो विकृतस्वनाः । यत्रेन्द्रियार्थाः पिशुनाः[35] श्रिया[36] हीनाश्च मानवाः ॥ १४५
#निपतति द्रुमश्छिन्नो वपुश्च[37] हयलक्षणम् । रत्नानि यस्य नश्यन्ति बहुशः प्रज्वलन्ति वा ॥ १४६

---

1 D ललरोधः । 2 A B C न is additionally found before this word in these Ms. 3 C परितच्छा । 4 A D दैत्यायां; C दैत्यायाः । * A this st. is missing in this Ms. † C सर्वमुत्पातलक्षणम् ॥ ‡ B this is not found in this Ms. 5 A B C °मुत्तरे । 6 A तथोष्णा; B D तथोक्ता । 7 C मानुषस्य । 8 A B D तुलामानस्य । § A B D समं चन्द्रमसंशयम् । 9 B भवति; C तदा । 10–11 B दुर्भिक्षं; 10 D दुःखं । ¶ B D दारुणत्वमयं भयम् । 12 A वोद्धतं च; B चौरोधत । ‖ A चयो व्यहन्ति चां वधाम् । 13–14 B D चावधम् । 15 B D वृष्टो; C वृक्षो । 16 A नादि; C गर्जेत् । 17 C कुक्कुटाः । 18 C लभते । 19 A प्रलया । 20 A बन्धन । 21 C दापयेत् । $ C आहुति पूतिगन्धाच विनाशाय न संशयः । 22 A च । 23 A प्रमूहोत; B D प्रसूहोत । 24 A ज्वलतो । 25–26 C वा न संपदा । 27 A B अनुदरी । ** C मिहमुंचंति यो नरः । 28 A B °भूतो; D °वित्तो । 29 A वित्तेषु; B वृत्तेषु । 30 C नविधः । 31 A वियंवितः; C अल्पविस्मृतिः । 32–34 A अचिरान्नियतम् । 35 C विगुणाः । 36 A C स्त्रिया । # C not found in this Ms. 37 A स्वमः ।

क्षीयते वा म्रियते वा पञ्चमासात् परं नृपः । गजस्यारोहणे यस्य यदा दन्तः[1] प्रभिद्यते ॥ १४७
दक्षिणे राजपीडा स्यात्सेनायास्तु वधं वदेत् । मूलभङ्गस्तु यातारं करिकानं[2](?) नृपं वदेत् ॥ १४८
मध्यमं रोगजाध्यक्षमग्रजे सपुरोहितम् । विडाल-नकुलो-लूक-काक-कङ्कसमप्रभाः ॥ १४९
यदा भङ्गो भवत्येषां तदा ब्रूयादसत् फलम् । शिरो-नासाग्रकण्ठेन सानुस्वारं निशंसनैः ॥ १५०
साक्षार्थी[3] सञ्चितं यच्च न तद् ग्राह्यन्तु वाजिनाम् । नाभ्यङ्गतो महोरस्कः कण्ठे वृत्तो सुखेरितः ॥ १५१
स पार्श्वे रुदन्वानुचो नो गृह्यते हि सः(?) । अन्योन्यसमुदीक्षन्ते हेष्यस्थानगता हयाः ॥ १५२
शयना-ऽऽसने परीक्षा ग्राममारीं वदेत् ततः । सन्ध्यायां सुप्रदीप्तायां यदा[4] सेनामुखा[5] हयाः ॥ १५३
त्रासयन्तो विभेषन्तो घोरात् पादसमुद्धताः । दिवसं यदि वा रात्रं हेषन्ति सहसा[6] हयाः[7] ॥ १५४
सन्ध्यायां सुप्रदीप्तायां तदा विन्द्यात् पराजयम् । उत्सुकाः[8] (उन्मुखा) रुदन्तो वा[9] दीनं दीनं समन्ततः ॥ १५५
हया यत्र तदोत्पातं निर्दिशेद्राजमृत्यवे । विच्छिद्यमाना[10] हेषंते[11] यदा रूक्षस्वरं हयाः ॥ १५६
खरवद्भीमनादेन तदा विन्द्यात् पराजयम् । उत्तिष्ठन्ति निषीदन्ति विश्वसन्ति[12] भ्रमन्ति च ॥ १५७
रोगार्त्ता इव हेषन्ते तदा विन्द्यात् पराजयम् । ऊर्द्ध्वमुखा विलोकन्ति विन्द्याज्जनपदे भयम् ॥ १५८
श्रान्ताः प्रहृष्टा धर्मार्त्ता विचरन्ति यदा हयाः । बालानां[13] वीक्ष्यमाणा[14]स्ते न ते ग्राह्या विपश्चितैः[15] ॥ १५९
मूत्रं पुरीषं बहुशो विलुप्ताङ्गाः[16] प्रकुर्वतः । हेषन्ते दीननिद्रार्त्तास्तदा कुर्वन्ति ते जयम् ॥ १६०
स्तम्भयन्तोऽथ लाङ्गूलं हेषन्तो दुर्मना हयाः । मुहुर्मुहुश्च जृम्भन्ते तदा शस्त्रभयं वदेत् ॥ १६१
यदा विरुद्धं हेषन्ते स्वल्पं विकृतिकारणम् । तदोपसर्गो व्याधिर्वा सद्यो भवति रात्रिजः ॥ १६२
भूम्यां ग्रसित्वा ग्रासं तु हेषन्ते प्राङ्मुखा यदा । अश्वारो[17]धाश्च[18] बद्धा[19]श्च[20] तदा क्लिश्यति क्षुद्भयम् ॥ १६३
शरीरं केसरं पुच्छं यदा ज्वलति वाजिनः । परचक्रं प्रयातं च देशभङ्गं च निर्दिशेत् ॥ १६४
यदा बालाः प्रक्षरन्ते पुच्छं चटपटायते । वाजिनः सस्फुलिङ्गा वा तदा विन्द्यान्महद्भयम् ॥ १६५
हेषन्ते तु यदा राज्ञः[21] पूर्वाह्णे† नाग-वाजिनः । तदा सूर्यग्रहं विन्द्यादपराह्णे तु चन्द्रजम् ॥ १६६
शुष्कं काष्ठं तृणं वाऽपि यदा संदंशते हयः । हेषन्ते सूर्यमुद्वीक्ष्य तदाऽग्निभयमादिशेत् ॥ १६७
‡यदा शेवालजलेवाऽपि मग्नं कृत्वा मुखं हयाः । हेषन्ते विकृता यत्र तदाप्यग्निभयं भवेत् ॥ १६८
उल्कासमाना हेषन्ते संदश्य दशना[22]न् हयाः । सङ्ग्रामे विजयं क्षेमं भर्तुः[23] पुष्टिं[24] विनिर्दिशेत् ॥ १६९
प्रसारयित्वा ग्रीवां च स्तम्भयित्वा च वाजिनाम् । हेषन्ते विजयं ब्रूयात्सङ्ग्रामे नात्र संशयः ॥ १७०
श्रमणा ब्राह्मणा वृद्धा न पूज्यन्ते यथा पुरा । सप्तमासात् परं यत्र भयमाख्यात्युपस्थितम् ॥ १७१
अनाहतानि तूर्याणि नर्दन्ति विकृतं यदा । षष्ठे मासे नृपो वध्यः भयानि च तदाऽऽदिशेत् ॥ १७२
कृत्तिकासु यदोत्पातो दीप्तायां दिशि दृश्यते । आग्नेयीं वा समासृत्य त्रिपक्षादग्नितो भयम् ॥ १७३
रोहिण्यां तु यदा[25] घोषो[26] निर्वातो[27] यदि दृश्यते । सर्वाः प्रजाः प्रपीड्यन्ते षण्मासात्परतस्तदा ॥ १७४
उल्कापातः सनिर्घातः सवातो यदि दृश्यते । रोहिण्यां पञ्चमासेन कुर्याद्घोरं[28] महद्भयम्[29] ॥ १७५

---

* C From here onwards some six sts. are not found in this Ms. 1 B D हंतः । 2 A करिजं; D करिकाणं । 3 A साक्षाक्षी । 4 A B D महा । 5 B D °सुखाः । 6 A D संचयो; B संधयो । 7 A हन्ना । 8 A B D उत्तमानां । 9 A D रुदती च; B रुदन्ति च । 10 A B D विच्छिद्यते । 11 A B D हेषंहेषं । 12 A B D वित्रसंति । 13 C बोला । 14 C संवीक्षमाणा । 15 C निमित्ततः । 16 A विष्णुते । 17-20 C अवरोहावरुद्धाश्च । 21 C प्राङ्गे । † C पूर्वनागा सवाजिनाम् । ‡ B यदाखेजोजसेवापि; C यदा सेनाजले वाऽपि । 22 C तदा संदशना । 23 C कर्तुः । 24 C वृष्टिम् । 25 A B महा । 26 B मेघो । 27 A D तिर्वातो; B निर्वाते । 28-29 A B कलहमृत्युदम् ।

एवं नक्षत्रशेषेषु यद्युत्पाताः पृथग्विधाः । देवतार्जन[1]लीनं[2] च प्रसाध्यं भिक्षुणा सदा ॥ १७६
वाहनं महिषीं पुत्रं बलं सेनापतिं पुरम् । पुरोहितं नृपं[3] वित्तं[4] घ्नन्त्युत्पाताः समुच्छ्रिताः ॥ १७७
एषामन्यतरं हत्वा निर्वृतिं यान्ति ते सदा । परं द्वादशरात्रेण सद्यो नाशयिता पिता ॥ १७८
यत्रोत्पाताश्च[5] दृश्यन्ते *यथाकालमुपस्थिताः । तेन संचयदोषेण राजा देशस्य नश्यते ॥ १७९
देवान् प्रव्रजितान् विप्राँस्तस्माद्राजाऽभिपूजयेत् । तदा शाम्यति तत् पापं यथा साधुभिरीरितम् ॥ १८०
यत्र देशे समुत्पाता दृश्यन्ते भिक्षुभिः क्वचित् । ततो देशादतिक्रम्य व्रजेयुरन्यतस्तदा ॥ १८१
संचित्ते[6] भिक्षुदे[7] देशे निरुत्पाते प्रियातिथौ । विहरन्ति सुखं तत्र भिक्षवो धर्मचारिणः ॥ १८२

**॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते उत्पातकाण्डं नाम चतुर्दशमोऽध्यायः ॥**



अथातः संप्रवक्ष्यामि ग्रहचारं जिनोदितम्[8] । ‡तत्रादितः प्रवक्ष्यामि शुक्रचारं निबोधत ॥ १
भूतं भव्यं भवद्वृष्टिमवृष्टिं भयमग्निना । जया-ऽजय-रुग-ऽर्थांश्च सर्वान् सृजति भार्गवः ॥ २
म्रियते वा प्रजा तत्र वसुधा च प्रकम्पते । दिवि मध्यं यदा गच्छेदर्धरात्रेण भार्गवः ॥ ३
दिवि मध्ये यथा दृश्येच्छुक्रः सूर्य[9]पथ[10]स्थितः[11] । सर्वभूतभयं कुर्याद्विशेषाद्वर्णसङ्करः ॥ ४
अकाले उदितः शुक्रो निवृत्तो वा यदा तदा । त्रिसांवत्सरिकं ग्रीष्मं शारदं चेतिभिर्भवेत् ॥ ५
गुरु-भार्गव-चन्द्राणां रश्मयस्तु यदा हताः । एकाहमपि दीप्यन्ते[12] तदा विन्द्याद्भयं खलु ॥ ६
भरण्यादीनि चत्वारि चतुर्नक्षत्रकाणि ह । षडैव मण्डलानि स्युस्तेषां नामानि लक्षयेत् ॥ ७
सर्वभूतहितं रक्तं परुषं रोचनं तथा । ऊर्ध्व[13] चण्डं[14] च तीक्ष्णं च निरुक्तं तानि साधयेत् ॥ ८
प्रथमं च द्वितीयं च मध्यमे शुक्रमण्डले । तृतीयं पञ्चमं चैव मण्डले साधुनिन्दिते ॥ ९
चतुर्थं चैव षष्ठं च मण्डले प्रवरे स्मृते । आद्ये द्वे मध्यमे विन्द्यान्निंदिते त्रिकपञ्चमे ॥ १०
श्रेष्ठे चतुर्थ-षष्ठे च मण्डले भार्गवस्य तु । शुक्लपक्षे प्रशंसन्ति सर्वेष्वस्तमनोदयम् ॥ ११
§अथातो वक्रगतिमान् भार्गवो नाभिवर्षति । विकृतानि च वर्तन्ते सर्वमण्डलदुर्गते ॥ १२
प्रथमे मण्डले शुक्रो यदास्तं यात्युदेति वा । मध्यमा सस्यनिष्पत्तिर्वर्ष[15] च मध्यमं नृणाम्[16] ॥ १३
भोजान् कलिङ्गानुड्रांश्च काश्मीरान् दस्यु-मालवान् । यवनान् सौरसेनांश्च गो-द्विजान् शवरान् वधेत् ॥
पूर्वतो[17] नरकालिङ्गो मागधो[18] जयते[19] नृपः । सुवृष्टिं क्षेममारोग्यं मध्यदेशे विनिर्दिशेत् ॥ १५
यदा चान्ये तिरोहन्ति[20] तत्रस्थभार्गवं ग्रहाः । कुण्डा[21] निजङ्घा[22] वधयः[23] क्षत्रिया लंबशाकुनाः[24][25] ॥ १६
धर्मिणः[26] सु(शू)रसेनाश्च मत्स्यकीरा[27] अनेकशः । किराता महिषाश्चैव पीड्यन्ते शुक्रपीडिते[28] ॥ १७
द्वितीयमण्डले शुक्रो यदास्तं यात्युदेति वा । शारदस्योपघाताय विषमां वृष्टिमादिशेत् ॥ १८
अहिच्छत्रं च[29] कच्छं[30] च[31] सूर्यावर्त्तं च पीडयेत् । पुरोहिता अमात्याश्च भोजराजा विनश्यति ॥ १९

---

1 A दस्वाब्दनि; B देवता च नि; C देवताश्च नि । 2 D °रक्तं । 3-4 A नृपवित्तं । 5 A घातत्या; B वातोत्पाता । * A तदा कलहं समुच्छ्रितम्; B तथा कलहमुच्छितं । † B not found in this Ms. 6 C सुवृत्तो; D सुवृत्ते । 7 C भक्षवो; D भिक्षवो । 8 A D °भाषितम्; C विशेषतः । ‡ This second half is missing in this Ms. 9-11 C सूर्यं यदाऽऽश्रितः; 10 C °रथ°; 11 A B प्रस्थितो । 12 C पीड्यन्ते । 13-14 A ऊर्द्धतोऽव; 14 B D दण्डं । § C D अथ गोमूत्रमतिमाम् । 15 C चित्रं वर्षं । 16 C missing in this Ms. 17 A D साल्वोसी । 18 B गंधो । 19 C जायते । 20 A D अभिरोहन्ति । 21-23 C कंडीवाधाः सावरयः; 21 B D कुण्डी; 22 A विजङ्घा; 23 A विजय । 24-25 C कलशानके । 26 C तिवृष्टाः । 27 C मत्स्यकाच्छान । 28 A पीड्यते; B °पीडिता । 29-31 A चक्रवन्तं ।

यदा वाऽन्ये तिरोहन्ति तत्रस्थं भार्गवं ग्रहाः । निषादाः पाण्डि(ण्ड्र)का[1] म्लेच्छाः संकुलस्थाश्च[2] साधवः ॥२०

कोटिकाः[3] पुरुषादाश्च[4] शिल्पिनो बर्बराः[5] शकाः[6] । वाहिका[7] यवनाश्चैव मण्डूकाः केकरास्तथा ॥ २१

पाञ्चालाः कुरवश्चैव पीड्यन्ते शङ्क-ग(गा)न्ध(धा)राः[8] । एकमण्डलसंयुक्ते भार्गवे पीडिते फलम् ॥ २२

तृतीये मण्डले शुक्रो यदास्तं यात्युदेति वा । तदा धान्यं सनिचयं पीड्यन्ते मूढकेतवः[9] ॥ २३

वाटधानाः[10] कुनाटाश्च[11] *कालकूटश्च पर्वतः । †रिषयः कुरु-पाञ्चालाश्चातुर्वर्णश्च पीड्यते ॥ २४

‡वाणिजाः[12] कुलजाः पण्या वनवासी तथाऽश्मकाः ।
अवन्ती(आवन्त्या)श्चापरान्ताश्च सपल्याः[13](?) सचराचराः[14] ॥ २५

पीड्यन्ते भय-शस्त्राभ्यां क्षुधारोगेण चार्दिताः । स्नेहसंस्थानवर्णैश्च ¶विचार्य नृपपीडनम् ॥ २६

चतुर्थे मण्डले शुक्रो कुर्यादस्तमनोदयम् । तदा सस्यानि[15] जायन्ते महामेघाः सुभिक्षदाः ॥ २७

पुण्यशीलो जनो राजा प्रजाश्चापि पुरोहितः[16] । बहुधान्यां[17] महीं विद्यादुत्तमं देवं[18]वर्षणम् ॥ २८

§अन्तधा(जा)श्चाप्यावन्तश्च मूलिका-श्यामकास्तथा । वाह्यो[19] विन्ध्यश्च[20] दन्ताश्च[21] पीड्यन्ते सर्षपास्तथा ॥ २९

यदा चान्ये ग्रहा यान्ति सौरेयाँ[22](?) म्लेच्छसङ्कुलाः । टङ्कनाश्च[23] पुलिन्दाश्च किराताः सौष्टकर्णिकाः(?) ॥ ३०

पीड्यन्ते पूर्ववत् सर्वं दुर्भिक्षेण भयेन च । ऐक्ष्वाको म्रियते राजा शेषाणां क्षेममादिशेत् ॥ ३१

यदा वा पञ्चमे शुक्रे कुर्यादस्तमनोदयौ । अनावृष्टिभयं घोरं दुर्भिक्षं जनयेत् तदा ॥ ३२

सर्वं श्वेतं तदा धान्यं क्रेतव्यं[24] सिद्धि[25] सिच्छता । त्याज्या देशास्तथा चेमे निर्ग्रन्थैः साधुवृत्तिभिः ॥ ३३

स्त्रीराज्यं[26] ताम्रकर्णाश्च कर्णाटाः[27] कमनोत्कटाः[28] । बाल्हीकाश्च[29] विदर्भाश्च[30] मत्स्य-काशी-सतस्कराः ॥ ३४

स्फीताश्च रामदेशाश्च[31] सूरसेनास्तथैव च । जायंते[32] वत्सराजानः परं यदि तदा हताः ॥ ३५

क्षुधा-मरण-रोगेभ्यश्चतुर्भागो भविष्यति । एषु देशेषु चान्येषु[33] भद्रबाहुवचो यथा ॥ ३६

यदा चान्येऽभिगच्छन्ति तत्रस्थं भार्गवं ग्रहाः । सुराष्ट्राः सिन्धु-सौवीराः मन्ति[34](ति)साराश्च साधवः ॥ ३७

आनर्त्त[35]-कच्छ-सैंधेयाः[36] साम्बष्ठाश्चार्जुना[37] जनाः । पीड्यन्ते तेषु[38] देशेषु म्लेच्छस्य म्रियते नृपः ॥ ३८

यदा तु मण्डले षष्ठे कुर्यादस्तमनोदयम् । शुक्रस्तदा प्रकुर्वीत भयानि तत्र क्षुद्भयम् ॥ ३९

वच्छाः पाञ्चाल-बाल्हीका गन्धाराश्च[39] गमेलकाः[40] । विदर्भाश्च[41] दशार्णाश्च पीड्यन्ते नात्र संशयः ॥ ४०

द्विगुणं धान्यमर्घेण[42] नोत्तरं वर्षयेत्[43] तदा । क्षत्रैः[44] शस्त्रं च व्याधिं च मूर्च्छयेत् तादृशेन[45] यत्[46] ॥ ४१

---

1 B पंडिता; C पंडिका । 2 C सकलस्थाः । 3 A कोटिदाः; B D कोडिजाः । 4 C पौरुषादाः । 5 A वर्द्धरा सका । 6 C कलाः । 7 C बाल्हिकाः । 8 B D सयुगंधराः; C सांयुगाद्दराः । 9 B व्यूटकेतवः; C हाटकेइयाः; D स्यूढकेतवः । 10 A वादधानाः । 11 C कुनाठाः; D कुनाढाः । * C पार्वतो क्रवयस्तथा । † C पाञ्चालाः कुरवश्चैव पीड्यते नात्र संशयः । ‡ C चातुर्वर्णास्तथा पांत्या सर्वे च वनवासिनः । 12 B वानिजाः; D वाणजाः । 13 B सापल्याः; C गोमल्याः; D सावल्याः । 14 B सवराधराः; C सधराचराः; D सधरावराः । ¶ C विचर्प्य मंदपीडितम् । 15 A साध्यानि । 16 B हिता । 17 A C °धान्यं । 18 A मेघ°; C मंद° । § B अत्रैधाश्चाप्यवंतश्च मूलकाश्चामकास्तथा । C अंते पश्चावावविश्च कुलेकश्चात्मकास्तथा । D अंते पश्चाप्यवंतिश्च मूलांकश्चामकास्तथा । 19-20 C वाह्ये विंधाः; D ब्राह्मैर्विंधाः । 21 C D कामाः । 22 A शौरिकाः; B सौरितुं । 23 C कोंकणाः । 24 B क्रतव्यं; C कत्तव्यं । 25 C भूति । 26 B त्रिराज्यं; C D त्रैराज्यं । 27–28 A कुनाला सुतयेत् कलाः; B कुनाला सुरयेत्कलाः; 28 D क्रमनोत्कटाः । 29 C काश्मीराः । 30 C वहुवाः । 31 A B D °देवाः । 32 A जयते । 33 C नान्येषु । 34 A B मन्ति°; C मत्ति°; D मंत्रि° । 35 A B D आवर्त्त° । 36 C °यौधेयाः । 37 A सन्धिस्ताः । 38 A वसु° । 39 C गश्च । 40 B गमेलिकाः; C तमेलिकाः । 41 A B विवसाः । 42 C महार्घेण । 43 B D वर्षणं । 44 A C क्षत्रे । 45 D तादृशे । 46 C यः ।

यदा वाऽन्येऽभिगच्छन्ति तत्रस्थं भार्गवं ग्रहाः । हिरण्यौषधयश्चैव शौण्डिका[1] दूतलेखकाः ॥ ४२

काश्मीरा बर्बराः[2] पौण्ड्रा[3] भृगुकच्छम (च्छा) अनु (नू) प्र(प)जाः[5] ।
पीड्यन्तेऽवन्तिगाश्चैव म्रियंते च नृपास्तथा ॥ ४३

नागवीथीति विज्ञेया भरणी-कृत्तिकाऽश्विनी । सत्त्वानां[6] रोहिणी चार्द्रा गजवीथीति[7] निर्दिशेत् ॥ ४४

ऐरावणपथं विन्यात् पुष्याऽऽश्लेषा-पुनर्वसुः । फाल्गुनौ च मघा चैव वृषवीथीति संज्ञिता ॥ ४५

गोवीथी रेवती चैव द्वे च प्रोष्ठपदे तथा । जरद्गवपथं विंद्याच्छ्रवणं वसु-वारुणम्[8] ॥ ४६

अजवीथी विशाखा च चित्रा स्वातिः करस्तथा । ज्येष्ठा-मूला-ऽनुराधासु मृगवीथीति संज्ञिता ॥ ४७

अभिजिद् द्वे तथाषाढे वैश्वानरपथः स्मृतः । शुक्रस्याग्रगताद्वर्णात्[9] संस्थानाच्च फलं वदेत् ॥ ४८

तज्जातं[10]प्रतिरूपेण जघन्यो-त्तम-मध्यमम् । स्नेहादिषु शुभं ब्रूयाद् भक्षा(क्ष्या)दिषु[11] भयं वदेत् ॥ ४९

तिष्यो ज्येष्ठा तथाऽऽश्लेषा सन्ध्यानां[12](यां) मूलमेव च । हस्तं चित्रा मघा-ऽऽषाढे शुक्रो दक्षिणतो व्रजेत् ॥ ५०

शुष्यन्ते[13] तोय-धान्यानि राजानः क्षत्रियास्तथा । उग्रभोगाश्च[14] पीड्यन्ते धननाशो[15] विनाशकः[16] ॥ ५१

वैश्वानरपथो नामा यदा हेमन्त-ग्रीष्मयोः । मारुता-ऽग्निभयं मृत्युः खारी च चतुःषष्टिका ॥ ५२

एतेषामेव मध्येन यदा गच्छति भार्गवः । विषमं सर्वमाख्याति बीजानि तु स्थले वपेत् ॥ ५३

खारी द्वात्रिंशिका ज्ञेया मृगवीथीति संज्ञिता । व्याधयश्च त्रिषु[17] ज्ञेया यदा चरति भार्गवः ॥ ५४

एतेषां तु यदा शुक्रो व्रजत्युत्तरतस्तथा । विषमं सर्वमाख्याति भृशं निम्ने[18] वपेत्तदा[19] ॥ ५५

कोद्रवाणां बीजानां खारी षोडशिका वदेत् । अजवीथीति विज्ञेया पुनरेषा न संशयः ॥ ५६

कृत्तिका रोहिणी चार्द्रा मघा मैत्रं पुनर्वसुः । स्वातिस्तथा विशाखासु फाल्गुन्योरुभयोस्तथा ॥ ५७

दक्षिणेन यदा शुक्रो व्रजत्येतैर्यदा समम् । मध्यमं वर्षमाख्याति समे बीजानि वापयेत् ॥ ५८

*निष्पद्यते तथा शस्यं मन्देनाप्यथ वारिणा । जरद्गवपथश्चैव खारी द्वादशिका भवेत् ॥ ५९

एतेषामेव मध्येन यदा गच्छति भार्गवः । तदाऽपि मध्यमं वर्षं मीषत्[20] पूर्वा[21] विशिष्यते ॥ ६०

सर्वं निष्पद्यते धान्यं न व्याधिर्नापि चेतयः । †खारी तदाऽष्टिका ज्ञेया सा[22] वीथी सा[23]संज्ञिता[24] ॥ ६१

एतेषामेव[25] यदा शुक्रो व्रजत्युत्तरतस्तदा । मध्यमं सर्वमाचष्टे नेतयो नापि व्याधयः ॥ ६२

निष्पत्तिः सर्वधान्यानां भयं चात्र न मूर्च्छति[26] । खारीचतुष्कं विज्ञेयं वृषवीथीति संज्ञिता ॥ ६३

अभिजिच्छ्रवणं चापि धनिष्ठा वारुणं तथा । रेवती भरणी चैव तथा भाद्रपदाऽश्विनी ॥ ६४

‡निचयास्तदा विपद्यन्ते खारी विन्द्याच्च पञ्चिका । ऐरावणपथो ज्ञेयो श्रेष्ठ[27] एवं[28] प्रकीर्तितः ॥ ६५

§ए[ते]षां[29] यदा दक्षिणतो भार्गवः प्रतिपद्यते । बहूदकं तदा विंद्यात् महा(हद्)धान्यं स्थले वपेत् ॥ ६६

जलजानि तु शोभन्ते ये च जीवन्ति वारिणा । खारी तदाष्टिका ज्ञेया गजवीथीति[30] संज्ञिता ॥ ६७

---

1 A सौण्डिकाः । 2 C दुर्दराः । 3 A पौद्र; B योज्याः । 4 A भेरु°; B भद्र°; C दारु° । 5 B अनूप्रजाः; C D पक्रूपजाः । 6 A सन्ध्यानां; B सौम्यानां । 7 C D राज° । 8 A °वारणम् । 9 C °नुगतात् । 10 B C तज्ञात; D ते ज्ञात । 11 C वृक्षा° । 12 B सन्ध्यानो; C सत्त्वानां; D सन्ध्यानां । 13 A पीड्यन्ते । 14 C अग्रतोयाः । 15 A °मासो । 16 A B विनायकम्; D विनाशिकः । 17 A C तृषु । 18-19 C न च येत्तदा । * A This is not found in this Ms. 20 A इषि । 21 A पूर्वांत् । † C This second half and the next stanza are missing in this Ms. 22 A स । 23 A सा च । 24 A संज्ञता । 25 A B C एषामेव । 26 C मुञ्चति । ‡ C This st. follows the next st. in this Ms. 27-28 A अष्टापच । 29 A एषा । § D This st. is not found in this Ms. 30 C राजवीथी ।

एं(ते)षामेव तु मध्येन यदा याति[1] तु[2] भार्गवः । स्थलेपूप्तानि[3] बीजानि जायन्ते निरुपद्रुतम्[4] ॥ ६८

*निचयाँश्च[5] विनश्यन्ति खारी द्वादशिका भवेत् । दानशीला नरा हृष्टा नागवीथीति संज्ञिता ॥ ६९

ए[ते]षामेव यदा शुक्रो व्रजत्युत्तरतस्तदा[6][7] । स्थले धान्यानि जायन्ते शोभन्ते जलजानि[8] वा[9] ॥ ७०

सर्वोत्तरा नागवीथी सर्वदक्षिणतोऽग्निजा[10] । गोवीथी मध्यमा ज्ञेया मार्गाश्चैव त्रयः स्मृताः ॥ ७१

उत्तरे उत्तरं विन्द्यान्मध्यमे मध्यमं फलम् । दक्षिणे तु जघन्यं स्याद् भद्रबाहुवचो यथा ॥ ७२

†यत्रोदितश्च[11] विचरेन्नक्षत्रं भार्गवस्तथा । नृपं पुरं धनं[12] मुख्यं पशुं हन्याद्विलम्बकः ॥ ७३

आदित्ये विचरेद्रोगं मार्गेऽतुल्यामयं भयम्‡ । गर्भोपघातं कुरुते ज्वलनेनाविलम्बितम्[13] ॥ ७४

इ(ई)ति[14]-व्याधि-भयान् घोरान् कुरुते तत्[15] प्रकोपनम्[16] । प्रविशन् भार्गवः सूर्ये जिह्मेनाथ विलम्बिना ॥ ७५

¶प्रथमे मण्डले शुक्रो विलम्बी डमरायते[17] । पूर्वापरा दिशो हन्यात्पृष्ठे तेन विलम्बिना ॥ ७६

$द्वितीये मण्डले शुक्रश्चिरगो मण्डलेरितः[18] । हन्याद्देशान्[19] धनं[20] तोयं सकलेन विलम्बिना ॥ ७७

तृतीये चिरगो[21] व्याधिं मृत्युं सृजति भार्गवः । चलितेन विलम्बेन मण्डलोक्ताश्च या दिशः ॥ ७८

‖चतुर्थे विचरन् शुक्रो सयी[22](?) हन्यात् सुयानकान्[23] । शश्व[24]शे(शो)षं[25] च सृजते निन्दितेन विलम्बिना ॥ ७९

पञ्चमे[26] विचरन् शुक्रो दुर्भिक्षं जनयेत् तदा । हन्यात्तं मण्डलं देशं क्षीणेनाथ विलम्बिना ॥ ८०

यदा तु मण्डले षष्ठे भार्गवश्चिरगो भवेत् । तदा तं मण्डलं देशं हन्ति लम्बेन[27] पाशिना[28] ॥ ८१

हीने चारे[29] जनपदानतिरिक्ते नृपं वधेत्[30] । समे तु समतां विंद्याद्विषमे विषमं वदेत् ॥ ८२

कृत्तिकां रोहिणीं चित्रां मैत्रमैन्द्रं[31] तथैव च । वर्षासु दक्षिणाद्येषु[32] यदा चरति भार्गवः ॥ ८३

व्याधिश्चेति[33][34]श्च[35] दुर्वृष्टिस्तदा धान्यं[36] विनाशयेत्[37] । महार्घं[38] जनमारिश्च जायते नात्र संशयः ॥ ८४

एतेषामेव मध्येन **मध्यमं फलमादिशेत् । उत्तरेणोत्तरं[39][40] विन्द्यात् सुभिक्षं क्षेममेव च ॥ ८५

मघायां[41] च विशाखायां[42] वर्षासु मध्यमस्थितः[43][44] । तदा संपद्यते सस्यं[45] समर्घं[46] च सुखं[47] शिवम् ॥ ८६

पुनर्वसुमाषाढां[48] च याति मध्येन भार्गवः । तदा व्याधिश्च[49] वृष्टिश्च[50] सर्वतः[51] समुदीर्यते ॥ ८७

आषाढां श्रवणं चैव यदि मध्येन गच्छति । ††स्कन्धे प्रसरा दृश्यन्ते पीड्यन्ते आर्यवासिनः ॥ ८८

‡‡प्राजापत्यमाषाढां च यदा मध्येन गच्छति । तदा व्याधिश्च चौराश्च पीडयन्ते वणिजस्तथा[52][53] ॥ ८९

---

1–2 C गच्छति । 3 A स्थलेष्वप्तानि; C स्थलेवप्तानि; D स्थलेपूतानि । 4 B निरुपद्रवे; C निरुपद्रवा; D निरुपद्रवा । * C This st. follows the next one in this Ms. 5 A निवयान् । 6–7 A व्रजेत् पुरतः । 8–9 B यानि वापयेत् । 10 A अग्निजा । † A ततोदितस्य वरिष्टे । 11 C यात्रो– । 12 A B वनं । ‡ A मार्गमाल्या सर्वभयम्; B मार्ग्रमल्यायसंभवम्; D मार्गमाल्याशयी भयम् । 13 B विलम्बकेन; C विलम्बिनः; D विलम्बनम् । 14 B एते । 15 A अन्त° । 16 A प्रकोपजम् । ¶ A This st. is not found in this Ms. 17 C तिमिरायते । $ C This st. is missing in this Ms. 18 A °रिता । 19–20 हव्यादेस वनं; 19 B देशं; 20 B वनं । 21 C चेवगो । ‖ This st. is missing in this Ms. 22 A सवी; B सपी । 23 A सम्रापिकाम्; B सयानकाः । 24 A चतु; D कासं । 25 A सोख । 26 C चतुर्थे । 27 C विलंवेन । 28 A पांशुनाम्; B पासिना; C पुंसन । 29 A वारे । 30 C वदेत् । 31 A मित्रं; C खलु । 32 A वृश्चि । 33–35 B C D चैवानावृष्टिः । 36 A चान्यं । 37 A विपद्यते । 38 D महार्थं । ** AB यदा गच्छति भार्गवः । 39–40 A B उत्तरे उत्तरं । 41 C D मघानां । 42 C D विशाखानां । 43–44 C मध्यगच्छतः । 45 A missing in this Ms. 46 A समर्थं । 47 C सुखमं । 48 B °मषाढां; C मेघाषाढा; D °मखाढां । 49 A B सुवृष्टिः; D सुवृष्टिं । 50 A B D विन्द्यात् । 51 A B D व्याधिः । †† A In this Ms. the second half is as follows:–तदा व्याधिषु चौराश्च स्कन्धे प्रवरा दृश्यन्ते ॥ In C it is as follows:–कुमाराश्चैव पीड्यन्ते अनार्याश्चांतवासिनः ॥ ‡‡ B this is not found in this Ms. 52–53 A वासिना स्वराम्; 52 C वणिजाः ।

चित्रामेव विशाखां[1] च याम्यमार्द्रां चं[2] रेवतीम् । मंत्रे भ(भा)द्रपदां चैव याति[3] वर्षति भार्गवः ॥ ९०

*फल्गुन्यथ भरण्यां च चित्रवर्णस्तु भार्गवः । यदा तु तिष्ठेद् गच्छेद् वा ध्रुवं भाद्रपदे जलम् ॥ ९१

प्रत्यूषे पूर्वतः शुक्रः पृष्ठतश्च बृहस्पतिः । यदान्योऽन्यं सं[4] पश्येतं[5] तदा चक्रं प्रवर्त्तते ॥ ९२

धर्मा-ऽर्थ-कामा लुप्यन्ते संभ्रमो[6] वर्णसङ्करः । नृपाणां च समुद्योगो यतः शुक्रस्ततो जयः ॥ ९३

अवृष्टिश्च भयं घोरं दुर्भिक्षं च तदा भवेत् । आढकेन तु धान्यस्य[7] प्रियो भवति ग्राहकः ॥ ९४

†यदा च पृष्ठतः शुक्रः पुरस्ताच्च बृहस्पतिः । यदा लोकयतेऽन्योन्यं तदेव हि फलं तदा ॥ ९५

कृत्तिकायां यदा शुक्रः विकृष्य प्रतिदृश्यते[8] । ऐरावणपथे यद् वत् तद् वद्[9] ब्रूयात् फलं तदा ॥ ९६

रोहिणीशकटं शुक्रो[10] यदा[11] समभिरोहति । चक्रारूढाः प्रजा ज्ञेया महद्[12]भयं[13] विनिर्दिशेत् ॥ ९७

पौण्ड्[14]य-केरल-चोलाश्च[15] ज्येष्ठाश्च[16] करवा(हा)टकाः[17] । चौरा[18] विकलपकाश्चैव[19] पीड्यन्ते तादृशेन यत्[20] ॥ ९८

प्रदक्षिणं यदा[21] याति[22] तदा हिंसति सं[23] प्रजाः । उपघातं बहुविधं वा सन्[24]नः कुरुते भुवि[25] ॥ ९९

संव्यानं[26]मुपसेवानो भद्रेयं[27](?)सोमं[28]शर्मणां[29] । सोमं च सोमजं चैव सोमं[30]पार्श्वं च हिंसति ॥ १००

वत्सा[31] विदेह[32] जिह्वाश्च[33] वसा[34](?)भौमा[35]स्तथो[36] रगाः[37] । ‡पीड्यन्ते ये च तद्भक्ताः §संव्या[38]ने मारुते यथा ॥ १०१

अलङ्कारोपघाताय यदा दक्षिणतो व्रजेत् । सौम्ये सुराष्ट्रे च तदा वामगः परिहिंसति ॥ १०२

आर्द्रां हत्वा निवर्तेत यदि शुक्रः कदाचन । सङ्ग्रामास्तत्र जायन्ते मांस-शोणित-कर्दमाः ॥ १०३

तैलिकाः सौरिकाश्चाङ्गा[39] ¶उष्ट्रा माहिषकास्तथा । ईषिंडाः[40] क्रूरकर्माणः पीड्यन्ते तादृशेन यत् ॥ १०४

दक्षिणेन यदा गच्छेद् द्रोण[41]मेघं तदा दिशेत् । ||वामगो रुद्रकर्माणि भार्गवः परिहिंसति ॥ १०५

**पुनर्वसुं यदा रोहेद्गाश्च गोजीविनस्तथा । हासं प्रहासं राष्ट्रं च विदर्भान् दासकां[42] स्तथा ॥ १०६

शंवरान्[43] मणिवन्धांश्च[44] श्वानषण्ढांश्च[45] वल्कलान् । पीडयेच्च महामुण्डान्[46] शुक्रस्तादृशेन यत् ॥ १०७

प्रदक्षिणे प्रयाणे तु द्रोणमेकं तदा दिशेत् । वामयाने तदा पीडां ब्रूयात्तत्सर्वकर्मणाम् ॥ १०८

पुष्यप्राप्ते द्विजान्[47] हन्ति प्राज्ञांश्च[48] धनु[49]शिल्पिनः । मरुण्डा[50] धर्मिणः[51] श्चापि पीड्यन्ते चोत्तरायणाः[52] ॥ १०९

---

1 A B विशाखायां । 2 A C स° । 3 A B C यानि । * A फाल्गुन्यार्द्रांमृगएणं; B फाल्गुण्यार्द्रांथ भरणी; D फाल्गुन्यार्द्रां भरणी च । In B and D the first half of the st. becomes the second half and vice versa. 4 A B तौ । 5 A पाश्यते; B पश्येतम्; D पश्येताम् । 6 B संचमः । 7 A धान्यानि । † A This st. is missing in this Ms. 8 A B प्रतिपद्यते । 9 A missing in this Ms. 10 C चैव । 11 C शुक्रः । 12 A B D महा° । 13 A भय; B D भयानि । 14 A B D पाण्ड्° । 15 B D °चौराः; C चेलाः । 16 C घेष्ठाः । 17 C करनाटकाः । 18 C कावीराः । 19 C विकलाः । 20 A ये; C नये । 21–22 A These two words are written twice in this Ms. 23 A B C सा । 24 C चरोमं । 25 B तु या; D शुचिः । 26 A सन्ध्योनस्; B सन्ध्यातम्; C सव्यानाम् । 27 A भद्रेयां; B भवेयं; C भद्रियं । 28 A साम । 29 C °कर्मिणः । 30 B सोमा° । 31 A वच्छाः; C D वसा । 32 B पिविदेह°; C विदेहाः । 33 A °जिह्माः; C पुष्यां । ‡ B This quarter is not found in this Ms. 34 A श्वः; D वत्साः । 35 A ततोमाः । 36–37 A तथा गरा; D तथा गवाः । § B This quarter is also missing in this Ms. $ A सन्ध्यानामारुहेत् यथा; B वसू भौमारुहेद्यथा । 38 C सच्छति । 39 A B °श्चांताः । ¶ A B चामुण्डानासिकास्तथा । 40 B इषिडं; C इषीडाः; D द्रषींडाः । 41 B रौद्र° । || C वामयाने तदा पीडा ब्रूयात्सर्वविधर्मिणः ॥ ** C This and the following three sts. are not found in this Ms. 42 A ससिकाः; B भमिकाः । 43 A सवरान्; B सवराण । 44 A अतिमण्डाः; B तिसंबाः । 45 A स्वाना मण्डाश्च; D स्वानमंजार । 46 A महामण्डा; B महासंडा । 47 A द्विजाः C प्राज्ञाश्च । 48 A B D प्रजाः । 49 A B D धन° ; 48–49 C धनुःशिल्पाति । 50 A पुरंढ; B D पुरंडा । 51 A गणकाः । 52 A चान्तरां पणाः; D चान्तराः पणाः ।

शुक्लपक्षे द्वितीयायां सोमशृङ्गं यदा(ऽ)शुभम्[1] । स्फुटिताग्रं द्विधा वाऽपि विन्द्याद् राहु(हो)स्तदा[2]ऽऽगमम्[3] ॥ १५
चन्द्रस्य चोत्तरा कोटी द्विशृङ्गं दृश्यते यदा । धूम्रो विवर्णो ज्वलितस्तदा राहोर्ध्रुवागमः ॥ १६
उदयास्तमने भूयो यदा यश्चोदयो[5]रवौ[6] । इन्द्रो वा यदि[7] दृश्येत[8] तदा ज्ञेयो ग्रहागमः ॥ १७
कबन्ध[9]-परिघा-मेघा धूम-रक्त[10]पट[11]-ध्वजाः । उद्गच्छमाने दृश्यन्ते सूर्ये राहोस्तदाऽऽगमः ॥ १८
कबन्धो[12] महिषाकारः शकटस्थो[13] यदा शशी । उद्गच्छन् दृश्यतेऽष्टम्यां तदा ज्ञेयो ग्रहागमः ॥ १९
सिंह-मेघो-ष्ट्रसंकाशः परिवेषो यदा शशी । अष्टम्यां शुक्लपक्षस्य[14] तदा ज्ञेयो ग्रहागमः ॥ २०
श्वेतके सरसंकाशे रक्त-पीतोऽष्टमो[15] यदा[16] । यदा चन्द्रः प्रदृश्येत तदा ब्रूयाद् ग्रहागमः ॥ २१
उत्तरतो दिशः श्वेतः[17] पूर्वतो रक्तकेसरैः । दक्षिणतो[18]ऽथ[19] पीताभैः[20] प्रतीच्यां कृष्णकेसरः ॥ २२
यदा[21] गच्छन् गृहीतोऽपि क्षिप्रं चन्द्रः प्रमुच्यते । परिविष्टो[22] दिनं[23] चन्द्रे विमर्दते[24] विमुञ्चति[25] ॥ २३
द्वितीयायां यदा चन्द्रः श्वेतवर्णः प्रकाशते । उद्गच्छमानः सोमो[26] वा[27] तदा गृह्येत राहुणा ॥ २४
तृतीयायां[28] यदा सोमो विवर्णो दृश्यते यदि[29] । पूर्वरात्रे तदा राहुः पौर्णमास्या[30]मुपक्रमेत् ॥ २५
अष्टम्यां तु यदा चन्द्रो दृश्यते रुधिरप्रभः । पौर्णमास्यां तदा राहुरर्धरात्रमुपक्रमेत् ॥ २६
नवम्यां तु यदा चन्द्रः परिवेश्यं[31] तु[32] सुप्रभः[33] । अर्धरात्रमुपक्रम्य तदा राहुमुपक्रमेत् ॥ २७
कृष्णप्रभो[34] यदा सोमो दशम्यां परिविष्यते । पश्चाद् रात्रं तदा राहुः सोमं गृह्णात्यसंशयः ॥ २८
*अष्टम्यां तु यदा सोमं श्वेताभ्रं[35] परिवेषते । तदा[36] परिघं[37] वै राहुर्विमुञ्चति न संशयः ॥ २९
कनकाभो यदाऽष्टम्यां परिवेषेण[38] चन्द्रमाः[39] । अर्धग्रासं[40] तदा कृत्वा[41] राहुरुद्गिरते पुनः ॥ ३०
परिवेषोदयो[42]ऽष्टम्यां[43][44] चन्द्रमा रुधिरप्रभः । सर्वग्रासं तदा कृत्वा राहुश्[45]चन्द्रं[46] विमुञ्चति[47] ॥ ३१
†रक्तपीता यदा कोटिर्दक्षिणः स्याद्ग्रहः सितः । पीता यदाऽष्टम्यां कोटी तदा श्वेतं ग्रहं वदेत् ॥ ३२
दक्षिणा मेचकाभा तु कपोतग्रहमादिशेत् । ‡कपोतमेचकाभा तु कोटी ग्रहमुपानयेत् ॥ ३३
रक्तोत्तरा[48] सितकोटिर्दक्षिणा[49] स्याद्[50] यदाष्टमी । कपोतग्रहं[51]माख्याति[52] पूर्वपश्चात्[53] सितप्रभम् ॥ ३४
¶पीतोत्तरा यदा कोटिर्दक्षिणो रुधिरप्रभः । कपोतग्रहणं विंद्याद् ग्रहं पश्चात् सितप्रभम् ॥ ३५
यतोऽभ्रस्तनितं विन्द्यात् मारुतं करकाशनी । रुतं वा श्रूयते किञ्चित् तदा विन्द्याद् ग्रहागमम् ॥ ३६
मन्दक्षीरा[54] यदा वृक्षाः सर्वदिक् कलुषा भवेत् । क्रीडते च यतो बालस्ततो विन्द्याद् ग्रहागमम् ॥ ३७
ऊर्ध्वं प्रस्पंदते चन्द्रश्चित्रः संपरिवेष्यते । कुरुते मण्डलं[55] स्पष्टस्[56]तदा विन्द्याद् ग्रहागमम् ॥ ३८

---

1 B C D प्रभम् । 2–3 A राहुवचो यथा । 4 B द्वश्टङ्गो; C द्वेश्टङ्गम् । 5 A B D पश्चादयो । 6 C रवे । 7 A B D यदा । 8 C वा दृश्येत् । 9 A B क्रमं च; D कमं च । 10 B रज°; C रज्ञ°; D रजू । 11 C यथा । 12 A B D मार्गवान् । 13 A B D शकटं वा । 14 C शुक्रजस्तस्य । 15 A B अष्टमी । 15–16 C मितोष्टमी । 17 A B D सर्वः । 18–20 C दक्षिणो भयभीताभः । 21 C उदयं । 22–23 C परिविष्टाभृतं । 23 A दिनः । 24 B विमर्देन; D विमर्द्दोन । 24–25 A परिवेश्यासुरप्रभः । 26–27 A श्वेतो वै । 28 C द्वितीयायाम् । 29 A प्रभः; C पुनः । 30 C पूर्वमास्याम् । 31–33 A परिवेश्यासुरप्रभः । 34 C °प्रदः । * A this st. is not found in this ms. 35 C श्वेतता । 36–37 C यदा तं परिलीढं । 38 A चन्द्रमाः । 39 A रुधिरप्रभः । 40 A B D °रात्रं । 41 A B D गत्वा । 42–44 C यदाष्टम्यां परिविष्टः । 45–47 C पुनरुद्गिरते गृह्णाः; 45–46 B जं चं; D जं च । † C This st. is preceded by the following st. in this Ms.–परिविष्यते यदाऽष्टम्यां चन्द्रमाः कृष्णसन्निभः । सर्वग्रासं तदा सोमो राजं जीर्णं विमुञ्चति ॥ This and the following st. are numbered as 35-36 in this Ms. ‡ C कपोतमेचकाहंसबकोग्रहमुपानयेत् । 48 B D रक्तोऽन्तरा । 49–50 A B D दक्षिणस्य । 51 C ग्रहणं । 52 C विंद्यात् । 53 C ग्रह° । ¶ C This st. is not found in this Ms. 54 B °क्षाराः । 55–56 A मण्डलस्फोटो ।

यतो विषयघातश्चायतयः पशु-पक्षिणः । तिष्ठन्ति मण्डलायन्ते ततो विन्द्याद् ग्रहागमम् ॥ ३९
पाण्डुर्वा द्रावलीढो वा चन्द्रमा यदि दृश्यते । व्यथितो हीनरश्मिश्च यदा तत्त्वे[1] निवेशनम्[2] ॥ ४०
यतः प्रबध्यते वेषस्ततो विन्द्याद् ग्रहागमम् । यतो[*] वा मुच्यते वेषस्ततश्चन्द्रो विमुच्यते ॥ ४१
गृहीतो विष्यते चन्द्रो वेषमावेव(?) विष्यते । यदा तदा विजानीयात् षण्मासाद्[3]ग्रहणं[4] पुनः[5] ॥ ४२
प्रत्युतमुत्तमादित्यं यदा गृह्येत चन्द्रमाः । भयं तदा विजानीयात् ब्राह्मणानामुपस्थितम्[8 9] ॥ ४३
[†]प्रातराशे यदा सोमो गृह्यते राहुणाऽऽवृतः । भयं तदा विजानीयादमात्यानां विशेषतः ॥ ४४
मध्याह्ने तु यदा चन्द्रो गृह्यते कनकप्रभः । क्षत्रियाणां नृपाणां च तदा भयमुपस्थितम् ॥ ४५
[‡]व्यावृत्ते यदि मध्याह्ने राहुणा गृह्यते शशी । भयं तदा विजानीयात् वैश्यानां समुपस्थितम् ॥ ४६
नीचावलंबी[10][11] सोमस्तु यदा गृह्येत राहुणा । [§]सूर्पाकारं[12] तदाऽऽनर्त्तं मरुकच्छं च पीडयेत् ॥ ४७
अल्पचन्द्रं[13] च द्वीपाश्च म्लेच्छाः पूर्वापरा[14] द्विजाः[15] । दीक्षिताः क्षत्रियामात्याः[16] शूद्राः पीडामवाप्नुयुः[17] ॥ ४८
यतो राहुर्ग्रसेचन्द्रं ततो यात्रां[18] निवेशयेत्[19] । वृत्ते निवर्तते[20] यात्रा[21] यतो[22] तस्मान्महद्[23] भयम् ॥ ४९
गृह्णीयादेकमासेन चन्द्र-सूर्यौ यदा तदा[24] । रुधिर[25]वर्ण[26]संसक्ता[27] सङ्ग्रामे जायते मही ॥ ५०
चौराश्च यायिनो म्लेच्छा घ्नन्ति साधूननायकान्[28] । विरुध्यन्ते[29] गणा[30]श्चापि नृपाश्च विषमे चराः[31] ॥ ५१
[¶]पूर्वं[32] हंतु[33] यदा[34] हत्वा[35] राहुं[36]निष्क्रमते शशी । रूक्षो वा हीनरश्मिर्वा पूर्वो[37] राजा विनश्यति ॥ ५२
दक्षिणाभेदने गर्भं दाक्षिणात्यांश्च पीडयेत् । अपराभेदने चैवं[38] नाविकांश्च जिघांसति ॥ ५३
निश्चलः सुप्रभः कान्तो यदा निर्याति चन्द्रमाः । राज्ञां विजय-लाभाय तदा ज्ञेयः शिवङ्करः ॥ ५४
एतान्येव तु लिङ्गानि सूर्ये[39] ज्ञेयानि धीमता । कृष्णपक्षे यदा चन्द्रः शुभो वा यदि वाऽशुभः ॥ ५५
उत्पाताश्च निमित्तानि शकुन-लक्षणानि च । पर्व[40]काले यदा सन्ति तदा राहोर्ध्रुवागमः ॥ ५६
रक्तो राहुः शशी सूर्यो हन्युः क्षत्रान् सितो द्विजान् । पीतो वैश्यान् तमः[41] शूद्रान् द्विवर्ण[42]स्तु जिघांस[43]ति ॥ ५७
चन्द्रमाः पीडितो हन्ति नक्षत्रं यस्य यद्यतः[44] । रूक्षः पापनिमित्तश्च विकृत[45]श्च विनिर्गतः[46] ॥ ५८
प्रसन्नः साधुकान्त[47]श्च दृश्यते[48] सुप्रभः[49] शशी । यदा तदा नृपान् हन्ति प्रजाः[50] पीतः सुवर्चसा[51] ॥ ५९
राज्ञो राहुः प्रवासे यानि लिङ्गान्यस्य पर्वणि । यदा गच्छेत् प्रशस्तो वा राजा राष्ट्रविनाशनः ॥ ६०

---

1 C तो । 2 C निवेवणम् । * C This second half is missing in this. Moreover this st. is followed by the following st:-ऊर्ध्वं प्रस्यंदते चन्द्रो लक्षो माली च वीक्षते । यदा तदा विजानीयात् षण्मासात् ग्रहणं पुनः ॥ † C This st. is not found in this ms. 3-5 A ब्राह्मणानामुपस्थितम् । 6-7 A B प्रत्युत्तमं तमादित्यं; C प्रत्ययस्तमनादित्ये । 8-9 A षण्मासाद्ग्रहणं पुनः; C दस्युनामुपस्थितम् । ‡ C this and the next st. are missing in this Ms. 10 C दिना° । 11 C °वलम्बे । § C सूर्या शूद्रांतनका वर्त्ता तरुक्तं च प्रपीड्यते । 12 B सूर्याकारं । 13 C अल्पामेंद्रे च । 14-15 C पर्वतराजिताः । 16 C धन्याः । 17 C अवर्ण्णयात् । 18 C रात्रौ । 19 C निवेदयेत् । 20 C निवृत्ते । 21 C यात्राया । 22-23 C तस्यामासु । 24 C ग्रहः । 25-27 C तदा रुधिरसंसक्ता । 28 A D अनायकम्; C सनायकम् । 29 A निरुध्यन्ति । 30 C रुणे । 31 A चिसयमुच्चराः; B D विषयमुच्चराः । ¶ B D This st. is preceded by the following st. in these Mss.-यतारसाहं (D यतोस्सहं) तु हित्वा तु राहुः निष्क्रमते शशी । तदा क्षेमं सुभिक्षं च मदरोगांश्च निर्दिशेत् ॥ । 32-34 A यतोनिस्स; 32-35 C यदोत्तरं हंतु भित्वा; 33 D पूर्व; 35 D हित्वा । 36 C हरो । 37 C श्रेष्ठो । 38 A B D रक्तान् । 39 C राहोः । 40 B C सर्व° । 41 A B D कृष्णः । 42 C D विवर्णः । 43 A B D विजानितु । 44 A यद्यतः; C तत्रवेत् । 45 A विकृतिः; C पीतः । 46 C विनिवर्त्तते । 47 C °कर्ता । 48 A B C मुच्यते । 49 C सुप्रदः । 50 C प्राज्ञः । 51 B C सुवर्चसः; D सबसर्चः ।

यतो राहुप्रमथने[1] ततो यात्रा न सिध्यति । प्रशस्ताः[2] शकुना यत्र सुनिमित्ता सुयोजिताः[3] ॥ ६१

राहुश्च चन्द्रश्च तथैव सूर्यो यदा सवर्णा न परस्परघ्नाः[4] ।
काले च राहुर्भजते रवीन्दू तदा सुभिक्षं विजयश्च राज्ञः ॥ ६२

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते विंशोऽध्यायः ॥

कोणजान्[5] पापसंभूतान् केतून्[6] वक्ष्यामि ज्योतिषि ।
मृदवो[7] दारुणा[8]श्चैव तेसामासं[9] (समासेन) निबोधत[10] ॥ १

*एकादिषु शतान्तेषु वर्षेषु[11] च विशेषतः । केतवः संभवन्त्येवं विषमाः पूर्वपापजाः[12] ॥ २
पूर्वलिङ्गानि केतूनामुत्पाताः[13] सदृशाः[14] पुनः[15] । गृहास्तमनान्ताश्च[16] दृश्यन्ते[17] चापि[18] लक्षयेत्[19] ॥ ३
‡तानि चैव केतूनां प्रवक्ष्यामि पृथक् पृथक् । उत्पाता यादृशा उक्ता ग्रहास्तमनान्यपि ॥ ४
अन्येस्मिन्[20] केतुभवने[21] यदा केतुश्च दृश्यते । तदा जनपदव्यूहः प्रोक्तान् देशान् स हिंसति ॥ ५
एवं दक्षिणतो विन्द्यादपरेणोत्तरेण च । कृत्तिकादियमान्तेषु[22] नक्षत्रेषु यथाक्रमम् ॥ ६
धूम्रः क्षुद्रश्च यो ज्ञेयः केतु[23]रङ्गारको[24]ऽग्निपः[25] । §प्राणसंत्रासयत्राणी स प्राणीसंशयस्तथा ॥ ७
त्रिशिरस्के द्विजभयं वरुणे[26] युद्धमुच्यते । अरश्मिके[27] नृपापायो विरुध्यन्ते परस्परम् ॥ ८
विक्षिले[28] विक्षिलं सर्वं क्षिली[29] सर्वपराजयम् । शृङ्गे शृङ्गीवधं पापः कबन्धे जनमृत्युदः[30] ॥ ९
रोगं (गो) सस्यविनाशश्च दुःकालो मृत्युविद्रवः । ¶मांस-लोहितकं ज्ञेयं फलमेवं च पंचधा ॥ १०
मानुषः[31] पशु-पक्षीणां समयस्तापसक्षयी । विषाणी[32] दंष्ट्रिघाताय सस्य[33]घाताय शङ्करः[34] ॥ ११
अङ्गारकोऽग्निसंकाशो धूमकेतुस्तु धूमवान् । नालीसंस्थानसंस्थानो वैडूर्यसदृशप्रभः ॥ १२
कनकाभा शिखा यस्य स केतुः कनकः स्मृतः । यस्योर्ध्वगा[35] शिखा शुक्ला स केतुः शुक्ल उच्यते ॥ १३
$त्रिवर्णश्चन्द्रवद् वृत्तः समसस्यं च दङ्करः(?) । त्रिभिः शिरोभिः शि(त्रि)शिरो गुल्मकेतुश्च गुल्मवत् ॥ १४
विक्रान्तस्य शिखे दीप्ते ऊर्ध्वगे च प्रकीर्तिते । ‖ऊर्ध्वमुण्डा शिखा यस्य स खिली[36] केतुरुच्यते ॥ १५
शिखे विषाणवद् यस्य स विषाणी प्रकीर्त्तितः । व्युच्छिद्यमानो भीतेन रूक्षा[37] च क्षिलिका शिखा ॥ १६
शिखाश्चतस्रो ग्रीवार्धं कबन्धस्य विधीयते । **एकरश्मिः प्रदीप्तस्तु स केतुर्दीप्त उच्यते ॥ १७
शिखा मण्डलवद् यस्य स केतुर्मण्डली स्मृतः । मयूरपक्षी विज्ञेयो[38] हसनः[39] प्रभयाऽल्पया[40] ॥ १८

---

1 C प्रतयते; D °प्रथमने । 2 C प्रशान्ताः । 3 A B D सुयोपितः । 4 A यस्य रघ्राः । 5 C कलिजान् । 6 C केचित् । 7 A B D मृतयः । 8 C अरुणाः । 9–10 A B D समासादं सदन्यथा । * C This is missing. 11 A वर्णेषु । 12 A D सर्वपापदाः; D पूर्वपापदाः । † C In this Ms. the following st. is found in its place.–धूमाद्याः श्वेतपर्यन्ताः वर्षाणिविषयानि च । केतवः खे समुत्पन्ना पीडयन्ति दिशं पुताम् ॥ । 13–15 B प्रवक्ष्यामि पृथक् पृथक् । 14–15 C ग्रहणा य च । 16 B उत्पातास्तादृशा उक्ताः; C उदयास्तमने चापि । 17–19 B ग्रहास्तावनवानपि; ग्रहाणां निलये क्षयेत् । ‡ B C not found. 20–21 C प्राङ्गारके थवे यस्मिन् । 21 C °संभति । 22 C सप्तनक्षत्रे । 23–25 C अंगारश्चाग्निजं भयम् । § C कनकप्रमाणसंत्रासी तालीसः अरश्मिके प्राणसंक्षयम् ॥ 26 C आरण्ये । 27 A B D रश्मिकेतु । 28 B विखिले; C विजिपः । 29 A B खिली । 30 C तु महद्भयम् । ¶ C संग्रामाश्च प्रवर्त्तन्ते मांसशोणितकर्दमाः । 31 C मनुष्य° । 32 C विषमं । 33 A यश; B D यस्य° । 34 B भंकरः; C मंहच । 35 B D मर्द्धा । $ C त्रिवर्णा क्लेशेषप्रोक्तः महाकेतुः महाद्युतिः । द्विशिरः द्विशिरं स्वादु गुल्मश्चैव तु गुल्मवान् ॥ ‖ C This and the next three lines are not found in this Ms. so that the second half of the 17th stanza forms the second half of the 15th st. 36 B खली । 37 B सूक्ष्मा । ** A B D एकसिंश्च प्रदीप्तो वा सेसमरोहितजा शुभाः ॥ 38 C संस्थाने । 39 C हसनश्च । 40 C प्रभाल्पया ।

*श्वेतः सुभिक्षदो ज्ञेयः सौम्यः शुक्तः शुभार्थिषु । कृष्णादिषु च वर्णेषु चातुर्वर्ण्यं विभावयेत् ॥ १९
केतोः समुत्थितः केतुरन्यो यदि च दृश्यते । क्षु-च्छस्त्र-रोग-विघ्नस्था[1] प्रजा[2] गच्छति संक्षयम्[3] ॥ २०
एते च केतवः सर्वे धूमकेतुसमं फलम् । विचार्य वीथिभिश्चापि प्रभाभिश्च विशेषतः ॥ २१
यां दिशं केतवोऽर्चिर्भिर्धूमयन्ति दहन्ति च । तां दिशं पीडयन्त्येते क्षुधाद्यैः पीडनैर्भृशम् ॥ २२
नक्षत्रं यदि वा केतुर्गृहं वाऽप्यथ धूमयेत् । ततः शस्त्रोपजीवांश्च स्थावरांश्च स हिंसति ॥ २३
स्थावरे धूमिते तज्ज्ञा यायिनो[5] व्यापिनस्तथा[6] । [प्राप्नुवन्]त्यनयान् घोरान् भयैरुग्रैः प्रपीडिताः ॥ २४
शुक्रं दीप्त्या यदि हन्याद्धूमकेतुरुपागतः । तदा सस्य-नृपान् नागान् दैत्यान् शूरांश्च पीडयेत् ॥ २५
शुकानां शकुनानां च वृक्षाणां चिरजीविनाम्[7] । शकुनि-[8]ग्रहै[9]पीडायां फलमेतत्[10] समादिशेत् ॥ २६
शिंशुमारं[11] यदा केतुरुपागत्य प्रधूमयेत्[12] । तदा जलचरं[13] तोयं त्र्यध्यवक्षांश्च[14](?)हिंसति ॥ २७
सप्तर्षीणामन्यतमो यदा केतुः प्रधूमयेत् । तदा सर्वभयं विन्द्यात् ब्राह्मणानां न संशयः ॥ २८
बृहस्पतिं यदा हन्याद् धूमकेतुरथार्चिर्भिः । †वेदविद्याविदो[15] वृद्धान्[16] नृपांस्तज्ज्ञांश्च हिंसति ॥ २९
एवं शेषान् ग्रहान् केतुर्यदा हन्यात्[17] स्वर[18]रश्मिभिः[19] । ग्रहयुद्धे तदा प्रोक्तं फलं तत्तु समादिशेत् ॥ ३०
नक्षत्रे[20] पूर्वदिग्भागे[21] यदा केतुः प्रदृश्यते । तदा देशान् दिशां[22]मुग्रां[23] भञ्जन्ते पापदां[24] नृपाः[25] ॥ ३१
‡वङ्गानङ्गान् कलिङ्गांश्च मगधान् काशनन्दनान्[26] । पट्टचावांश्च कोशंबीं धेणुसारं सदाहवम् ॥ ३२
तोसलिङ्गान् सुलान् नेद्रान् माकन्दामलदांस्तथा । कुनटान् सिथलान् महिषान् माहेन्द्रं पूर्वदक्षिणः ॥ ३३
वेणान् विदर्भमालान् अश्मकांश्च छर्वणान् । द्रविडान् वैदिकान् द्रादेकलान् दक्षिणापथे ॥ ३४
कोङ्कणान् दंडकान् भोजान् गोमान् सूर्परिकं चनम् । किष्किंधान् वनवासांश्च लङ्कां हन्यात् स नैरुतैः ॥ ३५
अङ्गान् सुराष्ट्रान् समुद्रान् भरुकच्छादसेरकान् । शूद्रान् हृषिजलरुहान् केतुर्हन्याद्विपथगः ॥ ३६
काम्बोजान् रामगांधारान् आभीरान् यवरच्छकान् । चैत्रसोत्रेयकान् सिन्धुमहामन्ययुवायुजः ॥ ३७
बाह्लीकान् वीनविषयान् पर्वतांश्चाप्यदुस्वरान् । सौधेयं कुरुवैदेहान् केतुर्हन्याद्यदुत्तराः ॥ ३८
चर्म्मासुवर्णु कलिं च किरातान् बर्बरान् द्विजान् । वैदिस्तसिपुलिन्दांश्च हन्ति साल्यां समुच्छ्रितः ॥ ३९
सदृशाः केतवो हन्युस्तासु मध्ये वधं वदेत् । व्याधिं शस्त्रं क्षुधां मृत्युं परचक्रं च निर्दिशेत् ॥ ४०
न काले नियता वेतु(?) न नक्षत्रं दिशस्तथा । आकस्मिको भवत्येव कदाचिदुदितो ग्रहः ॥ ४१
षट्‌ त्रिंशत् तस्य वर्षाणि प्रवासः परमः[27] स्मृतः । मध्यमः सप्तविंशं तु जघन्यस्तु त्रयोदश ॥ ४२
एते प्रायेण[28] दृश्यन्ते येऽन्ये[29]तीव्रभयादृते[30] । प्रवासं शुक्रवचास्य विन्द्यादु(दौ)त्पातिकं महत् ॥ ४३
धूमध्वजो धूमशिखो धूमार्चिर्धूमतारकः । विकेशी विशिख[31]श्चैव मयूरो विद्धमस्तकः ॥ ४४
महाकेतु[32]श्च श्वेत[33]श्च केतुमान् केतुवाहनः । उल्काशिख[34]श्च जाज्वल्यः[35] प्रज्वाली वांबरीषकः ॥ ४५

---

* A B D श्वेते सुभिक्षं डमरं यस्य चाग्रेवद शिखा । 1 A B D °विघ्नान्ता । 2 A प्रज्ञा । 3 ABD संशयम् । 4 C हेम° । 5 C यायिनां । 6 C धूमिते । 7 C फलसंयुतम् । 8-9 C शुकेचैतेन । 10 C केतुः । 11 A सशिरमारः; B शिशिमारः; D शशिमारः । 12 A B प्रधावयेत् । 13 A B D जलधराः । 14 A जह्या शून्यः; B यस्या धूपः; D जह्याधूथश्च । † C देशांश्च ब्राह्मणान् विद्वान् । 15 B not found. 16 B D विद्वान् । 17-19 A आदित्या गुरुरश्मिभिः; 17 B यस्य; D जह्या । 20 A B D नक्षत्रं । 21 A B D पूर्वदिक्षु । 22-23 B दशानुग्रां; C भयोमुग्रां । 24 C पापजां । 25 C दिशाम् । ‡ Most of the names of the countries occurring in the sts. from 32 to 39 are unintelligible; but I have not tried to emend them as their meaning is clear. 26 A B °चंदनान्; C काशिकांस्तथा । 27 A B D परतः । 28 C प्रयाणा । 29 C येने । 30 C मयाहितः । 31 A विवासः; B D बिसरी । 32 C श्वेतः । 33 C केतुः । 34 C not found. 35 not found.

ह्रेन्द्रस्वरो ह्रेन्द्रकेतुः शुक्लवासोऽन्यदन्तकः[1] । विद्युत्समो[2] विद्युल्लतो विद्युद्विद्युत्स्फुलिङ्गकः ॥ ४६

विक्षणो[3] ह्यरुणो गुल्मः कबन्धो[4] ज्वलिताङ्कुरः । तालीशः[5] कनकश्चैव विक्रान्तो मांसरोहितः ॥ ४७

*वैवस्वतो धूमसाली महार्चिश्च विधूमितः । दारुणाः केतवो ह्येते भयमिच्छन्ति दारुणम् ॥ ४८

जलदो जलकेतुश्च[6] जलरेणुसमप्रभः । रूक्षो वा जलवान् शीघ्रं विप्राणां भयमादिशेत् ॥ ४९

शिखी[7] शिखण्डी[8] विमलो विनाशी[9] धूमशासनः[10] । विशिखानः[11] शतार्चिश्च[12] शालकेतुरलक्तकः ॥ ५०

घृणो[13] घृतार्चिश्च यवनश्[14]चित्रपुष्पविदूषणः । विलम्बी विषमो[15] मिश्च वा(पा) तक्री[16] हसनः शिखी[17] ॥ ५१

कुटिलः[18] कडूवखिलंगः[19](?)कुचित्रगोऽथ निश्चयी[20] । [ज्ञेयानि]नामानि[नि]रुक्तैश्च येषां नोक्तं तु[20] लक्षणम्[21] ॥ ५२

येऽन्तरिक्षे जले भूमौ गोपुरेऽट्टालके गृहे । वस्त्रा-भरण-शस्त्रेषु ते[22] उत्पाता[23] न[24] केतवः[25] ॥ ५३

दीक्षितान् पितृदेवांश्च विप्रान् भूतान् वनीपकान् । पूजयेच्छान्तिपुष्ट्यर्थं पापकेतुसमुत्थिते ॥ ५४

पौरा जानपदा राजा विप्राश्च[26] वणिजो नराः । †दान-पूजां[27] ध्रुवं[28] कुर्युः[29] केतोः प्रीतिकरोऽन्यतः(?) ॥ ५५

यथा हि बलवान् राजा सामन्तैः सारपूजितः । नात्यर्थं बाध्यते तत्तु तथा केतुः सुपूजितः ॥ ५६

सर्पो[30] दष्टो[31] यदा मन्त्रैरगदैश्च चिकित्स्यते । केतुर्दुष्टस्तथा लोकैर्दान-जपैश्चिकित्स्यते ॥ ५७

यः केतुचारं निखिलं यथावत् पठेत् सुयुक्तं श्रमणः सुमेधाः[32] ।
स केतुदग्धांस्त्यजते हि देशान् प्राप्नोति पूजां च नरेन्द्रमूलात् ॥ ५८

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते एकविंशोऽध्यायः ॥

---

सर्वग्रहेश्वरः सूर्यः प्रवासमुदयं प्रति । तस्य चारं प्रवक्ष्यामि तन्निबोधत तत्त्वतः[33] ॥ १

सुरश्मी रजतप्रख्यः[34] स्फटिकाभो[35] महाद्युतिः । उदये दृश्यते सूर्यः सुभिक्षं नृपतेर्हितः ॥ २

रक्तः शस्त्रप्रकोपाय भयाय च महार्घदः[36] । नृपाणामहितश्चापि स्थावराणां च कीर्त्तितः ॥ ३

पीतो लोहितरश्मिश्च व्याधि-मृत्युकरो रविः । विरश्मिर्धूम्र[37]कृष्णाभः क्षुधार्त्त(र्त्ति)सृष्टि[38] रोगदः ॥ ४

कबन्धेनाऽऽवृतः सूर्यो यदि दृश्येत प्राग् दिशि । वङ्गानङ्गान् कलिङ्गांश्च काशी-कर्णाट-मेखलान् ॥ ५

मागधान् कटकालांश्च[39] कालवक्रोष्ट्र[40]कर्णिकान् । महेन्द्रसंश्रितान्[41] पुड्रां[42]स्तदा हन्याच्च भास्करः ॥ ६

कबन्धो[43] वाम[44]पीतो वा दक्षिणेन यदा रविः । चर्विलान्[45](?) मलयान्पुड्रां[46] स्त्रीराज्यं वनवासिकान् ॥ ७

किष्किन्धांश्च कुनाटांश्च[47] ताम्रकर्णांस्[48]तथैव च । स‡ वक्र-चक्र-क्रूरांश्च कुणपांश्च स हिंसति ॥ ८

---

1 C स्यदत्तकः । 2 A B D °स्तम्भः । 3 A च्चित्कल्प; B चिकिस्किल्पी; D किस्विचलयः । 4 A कर्मदः । 5 A B D लातोली । * C Before this st. the following st. is additionally found in this Ms. कवग्रो यूपकेतुश्च रश्मिमाली च कीर्तितः । धूमार्चिरंकुशो धूमो विषाणी भृंशिरस्तथा ॥ 6 A रेणुश्च । 7 A B D खिली । 8 A सिलीडी । 9 A विनामी; C विरागी । 10 A D सांबनः; B सांवरः । 11 C दिविशाखः । 12 A सनार्चिश्च । 13 A घृषः; B D कृषः । 14 B पवतः; C पणवः । 15 C विपदः । 16 A B D पताकी । 17 A सखी; C शिखः । 18 A B D कुडुलः । 19 A B D उद्ग-कुफलिखः । 20–21 केतुश्च । 22–25 A तत्रत्या वा न केतवः; C तथैतदुप-पाचके । 26 A वणिपाः । † C कुर्यांश्च–पूर्वजान् सत्रान् च केतोः प्रशमा इव । 27–29 A कुर्युः शस्त्राणि पूजार्थें । 30–31 A सर्प-दृष्टौ । 32 A ससेकः । 33 D यत्ततः । 34 B रजतः प्राख्यः; D रजतः प्रख्यः । 35 A D स्फुटिकामः । 36 A D महार्घंह; B महाप्रभः । 37 A धूमधूम्र° । 38 A °वृष्टि°; B °सृष्ट°; C दृष्टि° । 39 B कटकाभान्; C केचलान् गाढान् । 40 B C D °चक्र° । 41 A B D संवृतान् । 42 A D ताद्रान्; B चाद्रान् । 43 A कमंध; C कच्वं वा । D कमांधः । 44 A वाम°; सपीतः । 45 B रुचिरान्; C रार्विला; D चचिरा । 46 A B D भङ्गान्; 47 C कर्णाटान् । 48 A °कुण्डान् । ‡ C स चक्रां चक्रां क्रिडान् कल्यांश्च सहि तां सति ।

अपरेण च कवंधस्तु दृश्यते द्युतितो यदा । *युगन्धरावर्ण[1](?)मरुत्[2]संराष्ट्रान् कच्छ-गैरिजान्[3] ॥ ९
कोङ्कणानपरान्तांश्च भोजांश्च कालजीविनः । अपरांस्तांश्च सर्वान् वै निहन्यात् तादृशो रविः ॥ १०
उत्तरे उदयोऽ[4]कस्य कबन्ध[5]सदृश[6]स्तदा[7] । क्षुद्रकान् मालवान् हन्ति सिन्धु-सौवीर-दर्दुरान्[8] ॥ ११

काश्मीरान् दरदां[9]श्चैव पलवां(पह्नवान्)[10] मागधांस्[11]तथा ।
साकेतान् कोशलान् काञ्चीमहिच्छत्रं[12] च हिंसति ॥ १२

कबन्धमुदये भानोर्यदा मध्ये प्रदृश्यते । मध्यमा मध्यसाराश्च पीड्यन्ते मध्यदेशजाः[13] ॥ १३
†नक्षत्रमादित्यवर्णो यस्य दृश्येत भास्करः । तस्य पीडा भवेत् पुंसः प्रयत्नेन[14] शिवः[15] स्मृतः ॥ १४

स्थालीपिठरसंस्थाने सुभिक्षं क्षुद्भयं नृणौ[16] (णाम्) ।
विदुल(रा)भे[17](?) तु राज्यस्य मृत्युः पिठरसंस्थिते[18] ॥ १५

सुवर्णवर्णे वर्षं[19] वा[20] मासं[21] वा[22] रजतप्रभे[23] । शस्त्रं शोणितवत् सूर्यो दाघो वैश्वानरप्रभे ॥ १६
शृङ्गी राज्ञां विजयदः कोशं[24]-वाहनवृद्धये । चित्रः सस्यविनाशाय भयाय च रविः स्मृतः ॥ १७
अस्तंगते यदा सूर्ये चिरं[25] रक्ता[26] वसुन्धरा[27] । सर्वलोकभयं विन्यात् तदा वृद्धानुशासने ॥ १८
उदयास्तमने ध्वस्तो[28] यदा वै कुरुते रविः । महा(हद्)भयं तदानीके[29] सुभिक्षं क्षेममेव च ॥ १९
एतान्यैव तु लिङ्गानि पर्वण्यां चन्द्र-सूर्ययोः । तदा राहुरिति ज्ञेयो विकारश्च न विद्यते ॥ २०
‡शेषमौत्पातिकं[30] प्रोक्तं विधानं भास्करं प्रति । ग्रहयुद्धे च वक्ष्यामि सर्वगत्या[31] च[32] साधयेत् ॥ २१

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते द्वाविंशोऽध्यायः ॥

†मासे मासे समुत्थानं चन्द्रं पश्यति[33] बुद्धिवान्[34] । वर्ण-संस्थान(?)रात्रौ तु ततो ब्रूयात् शुभा-शुभम् ॥ १
स्निग्धः श्वेतो विशालश्च पवित्रश्चन्द्रः शस्यते । किञ्चिदुत्तरशृङ्गश्च दस्यून्हन्यात्[35] प्रदक्षिणम् ॥ २
अश्मकान् भरतानुड्रान् काशि-कलिङ्गमालवान् । दक्षिणद्वीपवासांश्च हन्यादुत्तरशृङ्गवान् ॥ ३
क्षत्रियान् यवनान् बाल्हीन् हिमवच्छूमास्थितान् । युगन्धर-कुरून् हन्याद् ब्राह्मणान् दक्षिणोन्नतः ॥ ४
भस्माभो निःप्रभो रूक्षः श्वेतशृङ्गोऽतिसंस्थितः[36] । चन्द्रमा न प्रशस्येत सर्ववर्णभयङ्करः ॥ ५
शबरान् दण्डकानुड्रान् मद्रांश्च द्रविडांस्तथा । शूद्रान् महासनान् वृ(व्रा)त्यान् समस्तान् सिन्धु-सागरान् ॥ ६
आनर्त्तान्मलकीरांश्च कोङ्कणान् प्रलयंबिनः[37] । रामा[38]वृत्तान् पुलिन्द्रांश्च मारुश्वभ्रं[39] च कच्छजान् ॥ ७
प्रायेण हिंसते देशानेतान्[40] स्थूलस्तु चन्द्रमाः । स¶मे शृङ्गे च विद्वेष्टी[41](?)तथा यात्रां न योजयेत् ॥ ८

---

* C युगच्चरामत्तपुरा । 1 D °वर्णं । 2 D °मसच्छु° । 3 A गौरिजान् । 4 C तु यथा । 5 C कबन्धः । 6-7 C प्रतिदृश्यते । 8 C °दुर्भगान् । 9 C दलदान् । 10 A D पालतान्; C सोयारंभान् । 11 A B D सखान् । 12 C महीनंर । 13 A °वेशजाः । † C नक्षत्रं शिवमानस्य विवर्णो यस्य भास्करः । 14-15 A प्रभसेत; B प्रसभेति; D सप्रमेत । 16 B D सृणौ; C धनौ 17 A विदुलाम; B D विभेलाभे । 18 C विवरं स्मृतेः । 19-20 C व शिवम् । 21 C वर्षं । 22-23 C रजनि° सन्निभे । 24 A केशे । 25-27 C दाघो वैश्वानरप्रभो । 28 A ध्वंसो । 29 C नीचैः । ‡ B This st. is not found in this Ms. 30 A उद्योतिष°; C उत्पादिकं । 31-32 C सर्वादिसह । † C Regarding this chapter almost all the stanzas are different and very corrupt, so their readings have not been noted. 33 A पश्येत; D दृश्यते । 34 A पूर्णिमाम् । 35 A तु । 36 A बिलस्थिति । 37 B प्रलयं विना । 38 A D रोमा° । 39 B मरुश्वभ्रं; D मरुस्वभ्रं । 40 A शांत° । ¶ B this second half is missing in this Ms. 41 विठिष्टी ।

चतुर्थी पञ्चमी षष्ठी विपर्णो विकृतः शशी । यदा मध्येन[1] वा[2] याति पार्थिवं हन्ति मालवम् ॥ ९

काञ्चीं किरातान् द्रमिलान् (द्रविडान्) शाक्यान्[3] लुब्धां(?)[4]स्तु सप्तमी ।
कुमारं युवराजानं चन्द्रो हन्यात् तथाऽष्टमी ॥ १०

नवमी मन्त्रिणश्चौरान् रध्वगान् व[5]रसंन्निभान् । दशमी स्थविरान् हन्यात् तथा वै पार्थिवान्[6] प्रियान्[7] ॥ ११

एकादशी भयं कुर्यात् ग्रामीणां[8]श्च[9] तथा गवाम्[10] । द्वादशी राजपुरुषांश्च वस्त्रं सस्यं च पीडयेत् ॥ १२

त्रयोदशीचतुर्दश्योर्भयं शस्त्रं च मूर्च्छति[11] । संग्रामः संभ्रमश्चैव जायते वर्णसंकरः ॥ १३

नृपा भृत्यैर्विरुध्यन्ते राष्ट्रं चौरैर्विलुप्यते । पूर्णिमायां[12] हते चन्द्रे ऋक्षे वा विकृतप्रभे ॥ १४

ह्रस्वो रूक्षश्च चन्द्र[13]श्च श्यामश्चापि भयावहः । स्निग्धः शुक्लो मही(हा)श्रीमां[14]श्चन्द्रो नक्षत्रवृद्धये ॥ १५

श्वेतः पीतश्च रक्तश्च कृष्णश्चापि यथाक्रमम् । सुवर्णसुखदश्चन्द्रो विपरीतो भयावहः ॥ १६

चन्द्रं प्रतिपदे(दि) योऽन्यो ग्रहः प्रविशते शुभः । संग्रामं जायते तत्र सप्तरा[15]ष्ट्रविनाशनं[16]ः ॥ १७

द्वितीयायां[17] तृतीयायां[18] गर्भनाशाय कल्पते । चतुर्थ्यां च सुघाती च मन्दवृष्टि(ष्टिं)च निर्दिशेत् ॥ १८

पञ्चम्यां ब्राह्मणं सिद्धान् दीक्षितांश्चापि पीडयेत् । यवनाय च कस्तानि(?)षष्ठ्यां पीडां व्रजन्त्यतः ॥ १९

महाधनाश्च[19] पीड्यन्ते क्षिप्रमैक्षुर[20]कास्तथा । ईतयश्चापि जायन्ते सप्तम्यां[21] सोमपीडने ॥ २०

विवर्णपुरुषश्चन्द्रो स्त्रीणां राजा निषेवते[22] । कपिलोऽपि[23] दक्षिणे मार्गे विन्द्यादग्निभयं तदा ॥ २१

सन्ध्यायां[24] कृत्तिकां ज्येष्ठां रोहिणीं पितृदेवताम् । चित्रां विशाखां मैत्रं च चरेद् दक्षिणतः शशी ॥ २२

सर्वभूतभयं विंद्यात् तदा घोरं तु मासिकम् । सस्यं वर्षं च वर्धन्ते चन्द्रस्तद्[25]वद्[25] विपर्ययात् ॥ २३

रेवती-पुष्ययोः सोमः श्रीमानुत्तरगो यदा । महावर्षाणि कल्पन्ते तदा कृतयुगं यथा ॥ २४

गोवीथीमजवीथीं वा वैश्वानरपथं तथा । विवर्णः सेवते चन्द्रः सदाऽल्पमुदकं भवेत् ॥ २५

गजवीथ्यां नागवीथ्यां सुभिक्षं क्षेममेव च । सुप्रभे प्रकृतिस्थे च महा(हद्)वर्षं च निर्दिशेत् ॥ २३

वैश्वानरपथं प्राप्ते[26] चतुरङ्गं तु दृश्यते । सोमो विनाशकृल्लोके तदा वाऽग्निभयङ्करः ॥ २७

अजवीथीमागते चंद्रे क्षुत्तृषाग्निभयं[27] नृणाम्[28] । विवर्णो हीनरश्मिर्वा भद्रबाहुवचो यथा ॥ २८

गोवीथ्यां नागवीथ्यां च चतुर्थ्यां दृश्यते शशी । रोग[29]-शस्त्राणि वैराणां(णि)[30]वर्षस्य(र्षाणि) च विवर्धयेत् ॥ २९

ऐरावणे चतुष्प्रस्थो[31] महावर्षः स उच्यते । इन्द्रः प्रकृतिसंपन्नः सुरश्मिः श्रीरिवोज्ज्वलः ॥ ३०

श्यामच्छिद्रश्च पक्षादौ यदा दृश्यते पां[32](?)सितः । चन्द्रमा सैस(रौर)वं घोरं नृपाणां कुरुते तदा ॥ ३१

धनुषा यदि तुल्यः स्यात्पक्षादौ दृश्यते शशी । ब्रूयात् पराजयं पृष्ठे[33] पचो[34] (?) प्रतिविनिर्दिशेत् ॥ ३२

वैश्वानरपथेऽष्टम्यां तिर्यक्स्थो वा भयं भवेत् । परस्परं विरुध्यन्ते नृपाः प्रायः सुवर्चसः ॥ ३३

दक्षिणं मार्गमाश्रित्य[35] वध्यन्ते[36] प्रवरा नराः । चन्द्रस्तूत्तरमार्गस्थः क्षेम-सौभिक्षकारकः ॥ ३४

चन्द्र-सूर्यौ विशृङ्गौ तु मध्यच्छिद्रौ हतप्रभौ । युगान्तमिव कुर्वन्तौ तदा यात्रा न शस्यते ॥ ३५

---

1–2 A मध्ये मवा । 3 A स्याक्या । 4 A लुब्ध्यंसु । 5 B D चर° । 6 D पार्थिवैः । 7 D प्रियान् । 8–9 B मासि नीचं; D गामिनी च । 10 D गवी । 11 B मूर्छितः; D मूछति । 12 B D पौर्णमास्यां । 13 A missing. 14 A महीमान्; D महीश्रीमान् । 15 B °राष्टं । 16 A विनाशनम्; B विनाशते । 17 B चन्द्रेण द्वितीयायां । 18 B not found. 19 A B महावनाश्च । 20 A ऐक्षुरकाः । 21 A स भूम्यां । 22 A निरोचते; D निवेशते । 23 A कतोऽपि । 24 D सन्ध्यानं । 25 A not found. 26 D not found. 27–28 A क्षुद्रशस्त्राग्निजं भयम् । 29 A D राग° । 30 B चौराणां । 31 B चतुर्थस्थः; D चतुर्थस्थौ । 32 A या । 33 B D पृष्ठः । 34 B यच्यो; D इच्यो । 35 B आसृत्य । 36 A बध्यन्ते ।

यस्य नक्षत्र-गतौ[1] कुर्यात् तां[2](?)वर्णसंकरम् (?) । विनाशं तत्र जानीयाद् विपरीते जयं वदेत् ॥ ३६
बहुवोदयको[3](?)वाऽथ ततो भयप्रदो भवेत् । मंदघाते फलं मन्दं मध्यमं मध्यमेनं[4] तु[5] ॥ ३७
चन्द्रमाः सर्वघातेन सोष्ट्रजाश्व[7](?)भयङ्करः । तथापि[8] नागरान् हन्यात् यदा ग्रहसमागमे ॥ ३८
नागराणां तदा[9] भेदो विज्ञेयस्तु पराजयः । यायिनामपि विज्ञेयं तदा युद्धं परस्परम् ॥ ३९
स्थावरा गुरवः प्राप्तो पुष्पोभिस्छत्रया(?)सह । शकस्य[10] चापरूपं[11] च[12] ब्राह्मी[13] गुदं[14]भद्दशाम्[15] (?) ॥ ४०
क्षत्रियाश्च भुवि ख्याताः कोशाम्बी देवता अपि । पीड्यन्ते तद्भक्ताश्च सङ्गामाश्च गुरोर्वधः[16] ॥ ४१

पशवः पक्षिणो वैद्या[17] महिषाः शबराः शका[18]: ।
सिंहलाः द्रामिलाः(द्रविडाः)[19] काचा[20] बंधुका[21]: पल्हवा[22] नृपा[23]: ॥ ४२

पुलिन्द्राः कोङ्कणा भोजाः कुरवो दस्यवः क्षमाः । शनैश्चरस्य घातेन पीड्यन्ते यवनैः सह ॥ ४३
यस्य यस्य च नक्षत्रमेकशो द्वन्द्वशोऽपि वा । ग्रहा वामं प्रकुर्वन्ति तं तं हिंसन्ति सर्वशः ॥ ४४
जन्मनक्षत्रघातेऽथ राज्ञो[24] यात्रा न सिद्ध्यति । नागरेण[25] हतश्चाल्पः स्वपक्षाय न यो भवेत् ॥ ४५
जा[26] चा[27]वनिजा गर्भा नागरा दारुजीविनः । गोपा गोजीविनश्चापि धनुस्सङ्गामजीविनः ॥ ४६
तिलाः कुलस्था[28] माषाश्च माषा मुद्गाश्चतुष्पदा[29]: । पीड्यन्ते बुधघातेन स्थावरं यच्च किञ्चन ॥ ४७
कनकं मणयो रत्नं शकाश्च यवनास्तथा । गु(छु)हारा[30]: पह्लवा मुख्याः क्षत्रिया मन्त्रिणो बलम् ॥ ४८

स्थावरस्य(राश्च)वनीका[31]कुनये[32](?)सिंहला नृपाः ।
वणिजां (जो[33]) वनशख्यं[34](?)च पीड्यन्ते सूर्यघातने ॥ ४९

पौरेया[35]: शूरसेनाश्च शका बाल्हीकदेशजाः । मत्स्याः कच्छाश्च वस्याश्च[36] सौवीराः सौधिका[37]स्तथा ॥ ५०
पीड्यन्ते केतुघातेन[38] ये च सत्त्वास्तथाश्रयाः । निर्घाता पापवर्षं वा विज्ञेयं बहुश[39]स्तथा ॥ ५१
पाण्ड्या[40]: केरलाश्चोला[41]: सिंहलाः साविकास्तथा । कुपनास्तेतयार्याश्च मूलका वनवासका[42]: ॥ ५२
किष्किंधाश्च कुनाटाश्च प्रत्यग्राश्च वनेचराः । रक्त-पुष्प-फलाश्चैव रोहिण्यां चन्द्र-सूर्ययोः ॥ ५३
एवं च जायते सर्वं कुर्वन्ति विकृतिं यदा । तदा प्रजा विनश्यन्ति दुर्भिक्षेण भयेन च ॥ ५४
अर्धमासं यदा चन्द्रं ग्रहा यान्ति विदक्षिणम् । तदा चन्द्रो जयं[43] कुर्यान्नागरस्य महीपतेः ॥ ५५
हीयमानं यदा चन्द्रं ग्रहाः कुर्वन्ति वामतः । तदा विजयमाख्याति नगरस्य महीपतेः ॥ ५६
गति-मार्गा-कृति-वर्णमण्डला[44]न्यपि[45]वीथयः । चार-नक्षत्रचारांश्च ग्रहाणां शुक्रवद् विदुः ॥ ५७

चन्द्रस्य चारं चरतोऽन्तरिक्षे सुचारदुश्चारसमं प्रचारम् ।
चर्या[46]युतः खेचरसुप्रणीतो यो वेद भिक्षुः स चरेन्नृपाणाम् ॥ ५८

**इति नैर्ग्रन्थे भद्रबाहुके निमित्ते चन्द्रचारसंज्ञो नाम त्रयोविंशोऽध्यायः ॥**

---

1 A D °गोत्रे । 2 B D ता । 3 B बहवोदधिकः; D बहुवोदधिकः । 4–5 B D मरणं तथा । 6 A मरणं । 7 B सोष्टद्राजा; D सौष्टद्राजा । 8 A नागरा । 9 A missing. 10–11 A सकस्य वायरूपं । 10–15 D सहसकस्य वि परषं पंच च ब्रह्मी गुदसद्दशान् । 16 B बुधः । 17 B विद्याः । 18 A शुकाः । 19 B D द्रमिलाः । 20 D कावाः । 21 B D चुंचुकाः । 22 A B पह्लवाः । 23 A B वृषाः । 24 A राज्यं । 25 A नागराणां । 26–27 A राज्ञाच्च । 28 A कुलस्थाः । 29 B तथैव च । 30 D गुणराः । 31 B वीनाटाः । 32 B कुनाशः । 33 D वसिजां । 34 D वनसंख्याः । 35 B गोरेयाः । 36 D वास्याः । 37 A B सोगन्धिजाः । 38 A °पातेन । 39 A बहुना । 40 A खण्डयाः । 41 A स्वोलाः । 42 A वनकसक । 43 A °दयं । 44 A मंडलान् । 45 A पथ । 46 B चार्या°; D वार्या° ।

अथातः संप्रवक्ष्यामि ग्रहयुद्धं यथा तथा । जन्तूनां ज्ञायते[1] येन जयस्तूर्ण[2][3] पराजयौ[4] (यः) ॥ १

गुरुः सौरश्च[5] नक्षत्रं बुधकाश्चैव[6] नागराः । केतुरङ्गारकः सोमो राहुः शुक्रश्च यायिनः ॥ २

श्वेतः पाण्डुश्च पीतश्च कपिलः पद्मलोहितः[7] । वर्णास्तु नागरा[8] ज्ञेया ग्रहयुद्धे[9] विपश्चितैः ॥ ३

*कृष्णोऽनीलश्च श्यामश्च कपोतो भस्मसंन्निभः । वर्णास्तु वाजि(यायि)नो ज्ञेया स्वर(ग्रह)युद्धे विपश्चितैः ॥ ४

उल्का ताराशं[10]ऽनिर्द्धिष्ण्यं विद्युतोऽभ्राणि मारुतः । समस्त्रिको[11] गणो[12] ज्ञेयो वधस्यापि[13] शुभा-शुभे ॥ ५

नातु(ग)रेऽस्य पिर्यः[14](?) शीघ्रः संयायीत्यभिधीयते[15] । मन्दगो यायिनोऽधस्तान्नागरं संयुगे भवेत् ॥ ६

नागरे तु हते विन्द्यान्नागराणां महद्भयम् । एवं यायिवधे[16] ज्ञेयं यायिनां तन्महद्भयम् ॥ ७

ह्रस्वो विवर्णो रूक्षश्च श्यामः कान्तोऽपसव्यगः । विरश्मिश्चाप्यरश्मिश्च[17] हतो ज्ञेयो ग्रहो युधि ॥ ८

स्थूलः स्निग्धः सुवर्णश्च सुरश्मिश्च प्रदक्षिणः । उपरिष्टात्प्रकृतिमान्[18][19] ग्रहो जयति तादृशः ॥ ९

उल्कादयो हरा[20] हन्युर्नागरं[21] संयुगे ग्रहाः[22] । नागराणां तदा विन्द्याद्भयं घोरमुपस्थितम् ॥ १०

यायिनो वामतो[23] हन्युर्ग्रहयुद्धे विमिश्रकाः[24] । पीड्यंते भौमपीडायां भयाः[25] सर्वत्र संयुगे ॥ ११

सौम्यजातं[26] तथा विप्राः सोम-नक्षत्र-राशयः । उदीच्याः[27] पार्वतेयाश्च पाञ्चालाद्यास्तथैव च ॥ १२

पीड्यन्ते सोमघातेन[28] नभो[29] धूमाकुलं भवेत् । तन्नामधेयास्तद्भक्ताः सर्वे पीड्यन्ते तान्समान् ॥ १३

बर्बराश्च किराताश्च पुलिन्दा द्रमिला ( विडा ) स्तथा । मालवा मलया वङ्गाः कलिङ्गाः पार्वतास्तथा ॥ १४

सूपकाश्च[30] सुराः क्षुद्राः पिशाचा वनवासिनः । तन्नामधेयास्तद्भक्ताः पीड्यन्ते राहुघातने[31] ॥ १५

यायिनः ख्यातयाः[32] (?) सस्थः[33] (?) सोलषा[34] (?) द्रमिला ( विडा )स्तथा ।
अङ्गा वङ्गाः कलिङ्गाश्च सौरसेनाश्च क्षत्रियाः ॥ १६

वाराश्चोग्राश्च भोजाश्च[35] यज्ञे[36], चन्द्रश्च[37] साधवः । पीड्यन्ते शुक्रघातेन सङ्ग्रामश्चाकुलो[38] भवेत् ॥ १७

श्वेतः श्वेतं ग्रहं यत्र हन्यात् सुप्रतिसो[39] (सुप्रसितो) यदा । ब्राह्मणानां मिथो भेदो नागराणां तु निर्दिशेत् ॥ १८

लोहितो लोहितं हन्यात् यदा ग्रहसमागमे । क्षत्रियाणां मिथो भेदं नागराणां तु निर्दिशेत् ॥ १९

†पीतः पीतं यदा हन्याद् ग्रहं ग्रहसमागमे । वैश्यानां नागराणां च मिथो भेदं तदाऽऽदिशेत् ॥ २०

कृष्णः कृष्णं यदा हन्यात् ग्रहं ग्रहसमागमे । शूद्राणामनयं घोरं यायिनां चैवमादिशेत् ॥ २१

‡श्वेतो नीलश्च[40] पीतश्च कपिलः पद्मलोहितः । विपद्यते यदा वर्णो नागराणां तदा भयम् ॥ २२

§श्वेतो वाऽत्र यदा पाण्डुग्रहं संपद्यते स्वयम् । यायिनां विजयं ब्रूयाद् भद्रबाहुवचो यथा ॥ २३

---

1 A D जायते । 2–4 B D तूर्णं जयपराजयौ । 5 A °भौमश्च । 6A °कन्यैव । 7 D पण° । 8 A यायिनः । 9 A स्वर° । * D This st. is not found in this Ms. 10 A युति । 11 A सामस्त्रिकः; D सामिस्त्रकः । 12 A णकः । 13 A D वयस्य । 14 A D जः । 15 A सन्ध्यायाम् । 16 A वचो । 17 A विरश्मि । 18–19 A उपरि सृत्यु कृतिमान् । 20 A दरः । 21 A न गिरं । 22 A B ग्रहः । 23 A यो मतः; B नामतः । 24 A D विमिश्रकः । 25 B नयः; D नव । 26 B सौम्यानां । 27 A राशुभः; B °राशुशः । 28 A सोम° । 29 B D ततो । 30 A सूर्यकाः; D सुर्यकाः । 31 D °घातेन । 32 A B ख्यातयः । 33 A सस्थौ; B सास्सो । 34 A सौलषाः; B सोलाष । 35 D सोजाः । 36 A जज्ञे; D यत्ते । 37 D चंद्रस्य । 38 A अतुलः । 39 A प्रसतिसो; D प्रतिसो । † B This st. is there in this Ms. but as it is not numbered there is anomaly in numbering from this st. onwards. ‡ B This st. is also not numbered so this st. and the next st. make one stanza in this Ms. 40 B not found. § A This st. follows the next st. in this Ms.

कृष्णो* नीलस्तथा श्यामः कपोतो भस्मसंनिभः। विपद्यते यदा वर्णो न तदा यायिनां भयम् ॥ २४
एवं शिष्टेषु वर्णेषु नागरेषु विचारतः। उत्तरं उत्तरा वर्णा यायिनामपि निर्दिशेत् ॥ २५
रक्तो† वा यदि वा नीलो ग्रहः सम्पद्यते स्वयम्। नागराणां तदा विन्द्यात् जयं वर्णमुपस्थितम् ॥ २६
नीलाद्याः स्युर्ये वर्णा उत्तरा उत्तरं पुनः। नागराणां विजानीयात् निग्रन्थे (निर्ग्रन्थ!) ग्रह[1]संयुगे ॥ २७
ग्रहो ग्रहं यदा हन्यात् प्रविशेद् वा भयं तदा। दक्षिणः सर्वभूतानामुत्तरोऽण्डजपक्षिणाम् ॥ २८
ग्रहौ गुरु-बुधौ विन्द्यादुत्तरद्वारमाश्रितौ। शुक्र-सूर्यौ तथा पूर्वां राहु-भौमौ च दक्षिणाम् ॥ २९
अपरां चन्द्र-सूर्यौ तु मध्ये केतुमसंशयम्। क्षेमङ्करो ध्रुवाणां च यायिनां च भयङ्करः ॥ ३०
अहश्च पूर्वसन्ध्या च स्थावरप्रतिपुद्गलाः। रात्रिश्चापरसन्ध्या च यायिनां प्रतिपुद्गलाः ॥ ३१
रोहिणीं च ग्रहो हन्यात् द्वौ वाऽथ बहवोऽपि वा। अपग्रहं तदा विन्द्याद् भयं वाऽपि न संशयः ॥ ३२
शुक्रः शङ्खनिकाशः स्यादीषत्पीतो बृहस्पतिः। प्रवालसदृशो भौमो बुधस्त्ववरुणसंनिभः ॥ ३३
शनैश्चरश्च नीलाभः सोमः पाण्डुर उच्यते। बहुवर्णो रविः केतू राहुर्नक्षत्र एव च ॥ ३४
उदकस्य प्रभुः शुक्रः सस्यस्य[3] च बृहस्पतिः। लोहितः सुख-दुःखस्य केतुः पुष्प-फलस्य च ॥ ३५
बुधस्तु बल-वित्तानां[4] सर्वस्य च रविः स्मृतः। दोकान्दनां[5] (?)वल्लीनां च शशाङ्कः प्रभुरुच्यते ॥ ३६
धान्यस्यार्थ[6] तु नक्षत्रं तथाऽऽरः सर्वशः प्रभुः। शनिश्च सुख-दुःखस्य सर्वे ह्येते त्रिदण्डवत् ॥ ३७
वर्णानां शङ्करो विन्द्याद् द्विजातीनां भयङ्करः। स्वपक्षे परपक्षे च चातुर्वर्ण्यं विभाव्यते ॥ ३८
वातः श्लेष्मा गुरुर्ज्ञेयश्चन्द्रः शुक्रस्तथैव च। वातिकौ[7] बुध[8]-सौरौ तु पैत्तिको भौम उच्यते ॥ ३९
पित्तश्लेष्मान्तिकः सूर्यो नक्षत्रं देवता भवेत्। राहुस्तु भौमो विज्ञेयः प्रकृतौ च शुभा-शुभे ॥ ४०
आर्यस्तं[‡] मादितं(?) पुष्यो धनिष्ठा पौष्णवी च भूत्। केतु-सूर्यौ तु वैशाखौ राहुर्वरुणसंभवः ॥ ४१
शुक्रः सोमश्च स्त्रीसंज्ञः शेषास्तु पुरुषा ग्रहाः। नक्षत्राणि विजानीयान्नामभिर्दैवतैस्तथा ॥ ४२
ग्रहयुद्धमिदं कृत्स्नं यः सम्यगवधारयेत्। स विजानाति निर्ग्रन्थो लोकस्य तु शुभा-शुभम् ॥ ४३

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते ग्रहयुद्धं नाम चतुर्विंशोऽध्यायः ॥

नक्षत्रं ग्रहसंपत्त्या कृत्स्नस्यार्घं शुभा-शुभम्। तस्मात् कुर्यात् सदोच्छ्रायं नक्षत्र[10]ग्रह[11]दर्शने ॥ १
सर्वे[12] यदुत्तरे काष्ठे ग्रहाः स्युः स्निग्धवर्चसः। तदा वस्त्रं च न ग्राह्यं सुसमासाम्यमर्घताम् (?) ॥ २
क्ष(क्षा)रा[13]ः क्षौद्रं यवाः कंगुरुदाराः सस्यमेव च। दुर्भाग्यं सन्निगच्छंति नैवानिचया यद्बुधः(?) ॥ ३
षष्टिकानां विरागानां द्रव्यस्य च[14] प्रणस्य[15] च। सन-कोद्रव-कंगूनां नीलभानां शनैश्चरः ॥ ४
यव-गोधूम-व्रीहीणां शुक्लधान्य-मसूरयोः। शूलीनां चैव द्रव्याणां शुक्रस्य प्रतिपुद्गलाः ॥ ५
मधु-सर्पिः-शृगालानां क्षीराणां च तथैव च। कुसुंभस्यातसीनां च गर्भाणां च बुधः स्मृतः ॥ ६
कोशधान्यं सर्षपाश्च पीतं रक्तमथाग्निजम्। अङ्गारकं विजानीयात् सर्वेषां प्रतिपुद्गलाः ॥ ७

---

* D This st. ought to have been numbered as 23 but it has been numbered as 24 thus making it tally with A. † A This st. is missing in this Ms. 1 A ग्रन्थ°। 2 A पूर्व°। 3 B शशस्य। 4 B D चलवित्तानाम्। 5 B D दोदकानां। 6 B वान्यर्घं°; D धन्यार्थं°। 7–8 B वातकेतु च। 9 A अर्थ°। 10 D नक्षत्रं। 11 D तु। 12 A D सर्वा। ‡ A सुसमासाम्य पर्थता; B सुसमान्यमरर्घता। 13 B क्षवा। 14–15 A वणकस्य।

महाधान्यस्य महतामिक्षूणां शर[1]-वंशयोः । गुरूणां मंद[2]-पीतानामथो[3](थ)ज्ञेयो बृहस्पतिः ॥ ८

मुक्ता-मणि-जलेशानां सूर[4]-सौवीर-सोमिनाम् । शृङ्गिणामुदकानां च सौ(सो)म्य(म)स्य प्रतिपुद्गलाः ॥ ९

उद्भिजा(ज्जा)नां च जन्तूनां[5] कन्द-मूल-फलस्य च । उष्णवीर्यविपाकस्य रवेस्तु प्रतिपुद्गलाः ॥ १०

नक्षत्रे[6] भार्गवः सोमः शोभन्ते(ते)सर्वशो यथा । यथाद्वारं तथा विन्द्यात् सर्ववस्तु यथाविधि ॥ ११

विवर्णा यदि सेवन्ति(न्ते)ग्रहा वै[7] राहुंसह्यमाः । दक्षिणा दक्षिणे मार्गे वैश्वानरपथं प्रति ॥ १२

गिरिनिम्ने[10] [11]च निम्नेषु[12] नदी-पल्वलवारिषु । एतेषु वापयेद् बीजं स्थलं वर्ज्ज(र्ज्य) तथा भवेत् ॥ १३

मल्लदा[13] मलवेदेषु राष्ट्राणां[14] सिन्धुसागरे । एतेष्वपि तदा सुष्णं(?) प्रियमन्यत् प्रसूयते ॥ १४

कृत्तिका-रोहिणीयुक्ता[15] बुध-चन्द्र-शनैश्चराः । यदा सेवन्ते सहितास्तदा विन्द्यादिदं फलम् ॥ १५

आज्यविकं[16] गुडं तैलं कार्पासो मधु-सर्प्पिषी । सुवर्ण-रजते मुद्गाः शालयस्तिलमेव च ॥ १६

स्निग्धे याम्योत्तरे[17] मार्गे पञ्चद्रोणेन शालयः । दशाढकं[18] प्रसक्तं स्यात् दक्षिणेन षडाढकम् ॥ १७

उत्तरेण तु रोहिण्यां चतुष्कं कुम्भमुच्यते । दशकं प्रसङ्गतो विन्द्यात् दक्षिणेन चतुर्दशम् ॥ १८

नक्षत्रस्य यदा गच्छेद् दक्षिणं शुक्र-चन्द्रमाः । सुवर्णं रजतं रत्नं कल्याणं प्रियतामियुः ॥ १९

धान्यं[19] यत्र[20] प्रियं विन्द्याद्भावो नात्यर्थदोहिनः[21](?) । उत्तरेण यदा याति नैतानि चिनुयात् तदा ॥ २०

उत्तरेण तु पुष्यस्य यदा युज्यति[22] चन्द्रमाः । भौमस्य[23] दक्षिणे पार्श्वे मघासु यदि तिष्ठति ॥ २१

मलदा(याँ)[24] माल[25]-वैदेहा यौधेयाः[26] संज्ञि[27]नायकाः । सुवर्णं रजतं वस्त्रं मणिर्मुक्ता तथा प्रियम् ॥ २२

चन्द्रः शुक्रो गुरुस्सोमो[28] मघानां यदि दक्षिणे । वस्त्रं च द्रोणमेघं[29] च निर्दिशेन्नात्र संशयः ॥ २३

आहट्टालिश्च[30] वापी च भद्रं[31] चैव यदोत्तरे[32] । ग्रहैर्युक्तस्तु त(य)दा कुम्भं तु पञ्चकम् ॥ २४

राहुः केतुः शशी शुक्रो भौमश्चोत्तरतो यदा । सेवन्ते चोत्तरं द्वारं यात्यस्तं वा कदाचन ॥ २५

निवृत्तिं चापि कुर्वन्ति भयं देवेषु सर्वशः । बहुतोयान् समान् विद्यान्महा[33]शालीश्च[34] वापयेत्[35] ॥ २६

कार्पासास्तिल-माषाश्च सर्पिश्चात्र प्रियं तथा । आशु[36]वाप्यानि वर्धन्ते योगक्षेमं च हीयते ॥ २७

चन्द्रस्य दक्षिणे पार्श्वे भार्गवो वा विशेषतः । उत्तरांस्तारकान् प्राप्य तदा विन्द्यादिदं फलम् ॥ २८

महाधान्यानि पुष्पाणि हीयन्ते चाशुभास्तथा[37] । कार्पास-तिल-माषाश्च सर्पिश्चैवार्घते[38] तदा ॥ २९

चित्रायां दक्षिणे पार्श्वे शिखरी[39] नाम[40] तारका । तयेन्दु[41]र्यदि दृश्येत तदा बीजं न वापयेत् ॥ ३०

गवाक्ष(ग्रे)ण हिरण्येन सुवर्ण-मणि-मौक्तिकैः । महिष्यजादिभिर्वस्त्रैर्धान्यं क्रीत्वा न[42] वापयेत् ॥ ३१

चित्रायां तु यदा युक्तश्चन्द्रो भवति दक्षिणः । षड्गुणं जायते धान्यं योगक्षेमं च जायते ॥ ३२

इन्द्रा[43]-ग्निदेवसंयुक्ता यदि सर्वे ग्रहाः कृशाः । अभ्यन्तरेण मार्गस्थास्तारका यास्तु बाह्यतः ॥ ३३

कंगु-दार-तिला मुद्गाश्चणकाः षष्टिकाः[44] शुकाः[45] । चित्रायोगं न सर्पेत चन्द्रमा उत्तरो भवेत् ॥ ३४

---

1 A रस°; D सर° । 2 A मंत°; D अथ । 3 B महोघों; D महा । 4 A सौव° । 5 A D जम्बू-नाम् । 6 B D नक्षत्र.। 7–9 B चोराहु सह्यमा । 10–11–12 A निस्रवनेषु । 13 A मलदा। 14 B D सुराष्ट्रान् । 15 A शुक्रः । 16 B D अजाविकं । 17 A यस्योत्तरे । 18 A प्रशक्तं । 19–20 B धान्यमंत्रं; D धान्यमत्र । 21 B नात्यर्थदेहिहनाः; D नात्यर्थहितः । 22 B पुष्यसि । 23 A तैमेऽस्य । 24 B मलवाः । 25 D मल° । 26 A पौषधेयाः; B वोधेयाः । 27 B संज्ञि°; D संजि° । 28 B भौमः । 29 A °मर्थं; D missing । 30 B आद्दालिकः । 31 B चन्द्रः । 32 A D उत्तरा । 33 A मसा° । 34 B °सिचन । 35 B चापयेत् । 36 A D असु° । 37 B चामराः; D वासुरः । 38 A अर्थते; D अर्यते । 39 B शिषरी । 40 B माम । 41 A ते इन्दुः । 42 B D नि° । 43 A B इन्द्राणि° । 44–45 B D षष्टिकासुकाः ।

संग्राह्यं च तदा धान्यं योगक्षेमं च जायते । अल्पसारा भवन्त्येते चित्रा वर्गा[1] न संशयः ॥ ३५
विशाखामध्यगः शुक्रस्तोयदो धान्यवर्धनः । समर्घं[2] यदि विज्ञेयं दशद्रोणक्रयं[3] वदेत् ॥ ३६
यायिनौ चन्द्र-शुक्रौ तु दक्षिणामुत्तरो तदा[4](?) । तारा-विशाखयोर्धाता[5] तदाऽर्घन्ति चतुष्पदाः ॥ ३७
दक्षिणेनानुराधायां यदा च व्रजते शशी । अप्रभश्च प्रहीणश्च वस्त्रं द्रोणाय कल्पयेत् ॥ ३८
ज्येष्ठा-मूलौ यदा चन्द्रो दक्षिणं व्रजते प्रभः । तदा सस्यं च वस्त्रं च वरीरी[6](?)वार्थ[7](?)विनश्यति ॥ ३९
प्रजानामनयो[8] घोरस्तदा जायति[9] तामसः[10] । प्रस्थक्रयस्य[11] वस्त्रस्य तेन क्षीयन्ति[12] तां प्रजाम् ॥ ४०
मूलं मन्देव(?)सेवन्ते[13](वेत)यदा दक्षिणतः शशी । प्रजातसर्वधान्यानां आढका नु तदा भवेत् ॥ ४१
कृत्तिकां रोहिणीं चैव पुष्या[14]-श्लेषा[15]-पुनर्वसून्[16] । व्रजते दक्षिणश्चन्द्रो दशप्रस्थं तदा भवेत् ॥ ४२
मघां विशाखां च ज्येष्ठाऽनुराधे मूलमेव च । दक्षिणे* व्रजते शुक्रश्चन्द्रे तदाऽऽढकमेव च ॥ ४३
कृत्तिकां रोहिणीं चित्रां विशाखां च मघां यदा । दक्षिणेन ग्रहा यान्ति चन्द्रस्त्वाढकविक्रयः ॥ ४४
गुरुः शुक्रश्च भौमश्च दक्षिणाः सहिता यदा । प्रस्थक्रयं तदा वस्त्रैर्यान्ति मृत्युमुखं प्रजाः ॥ ४५
उत्तरं भजते मार्गं शुक्रः[17]पृष्ठं तु चन्द्रमाः । महाधान्यानि वर्धन्ते कृष्ण[18]धान्यानि दक्षिणे ॥ ४६
दक्षिणं चन्द्रशृङ्गं[19] च यदा वृद्धतरं भवेत् । महाधान्यं तदा वृद्धं[20] कृष्णधान्यमथोत्तरम् ॥ ४७
कृत्तिकानां मघानां च रोहिणीनां विशाखयोः । उत्तरेण महाधान्यं कृष्णधान्यं च दक्षिणे ॥ ४८
यस्य देशस्य नक्षत्रं पीड्यते[21]हि[22] यदा यदा[23] । तं देशं भिक्षवः स्फीताः संश्रयेयुस्तदा तदा ॥ ४९
धान्यं वस्त्रमिति ज्ञेयं तस्यार्घं[24] च शुभा-शुभम् । ग्रहनक्षत्रसंप्रत्य(प्राप्तौ?) कथिता(तं)भद्रबाहुना ॥ ५०

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते संग्रहयोगार्थकाण्डं[25] नाम पञ्चविंशोऽध्यायः ॥

---

नमस्कृत्य महावीरं सुरा-सुरनमस्कृतम् । स्वप्नाध्यायं[26] प्रवक्ष्यामि शुभा-शुभसमीरितम् ॥ १
स्वप्नमाला दिवास्वप्नो[27] नष्टचिन्तामयः[28] फलाः । प्रकृता-कृतस्वप्नैश्च नैते ग्राह्या निमित्ततः ॥ २
कर्मजा द्विविधा यत्र शुभाश्चात्राशुभास्तथा । त्रिविधाः संग्रहाः स्वप्नाः कर्मजाः पूर्वचिन्तिताः ॥ ३
भवान्तरेषु चाभ्यस्ता[29] भावाः सफल-निष्फलाः । तान् प्रवक्ष्यामि तत्त्वेन शुभा-शुभफला[30]निमान्[31] ॥ ४
जलं जलरुहं धान्यं सदलाम्भोजभाजनम् । मणि-मुक्ता[32]-प्रवालांश्च[33] स्वप्ने पश्यन्ति श्लेष्मिकाः ॥ ५
रक्त-पीतानि द्रव्याणि यानि[34] पुष्टान्य[35]ग्निसंभवान्[36] । तस्योपकरणं विन्द्यात् स्वप्ने पश्यन्ति पैत्तिकाः ॥ ६

---

1 B °वर्षा । 2 A समर्थं । 3 B °क्रमं; D °क्षयं । 4 B D °त्तरा । 5 B दाता; D दतो । 6–7 B सरी चाप्य; D रारी वाप्य । 8 D आमयः । 9 A यान्ति । 10 A तां समाम्; D तातसाम् । 11 A प्रस्त° । 12 B दीयन्ति । 13 B संतेच; D मंतेव । 14–16 B चैत्र-पुष्य-पुनर्वसु; D चैत्र is not found in this Ms. The rest is just like B. * B This second half is not found in this Ms. 17 A शुक्रः । 18 A कृत्स्न° । 19 A °मृत्यु । 20 D ज्ञेयं । 21–22 A न पीड्यन्ते । 23 A तदा । 24 A °अर्थं । 25 B D ग्रहसंयोगार्थकांडं । 26 A B स्वप्नान्यहं । 27 B °सुप्तः । 28 B °मथो । 29 A वा न्यस्ता । 30–31 A °फलस्थितान्; D फलं त्विमम् । 32 A °मुक्ति°; D °मुक्षि° । 33 D °प्रवालाग्रं । 34–36 B यान्युत्ता-न्यग्निसन्निभां; D यानष्टान्यग्नि-सभवाम् ।

च्यवनं[1] प्लवनं यानं पर्वताग्रे द्रुमं गृहम् । आरोहन्ति नराः स्वप्ने वातिकाः पक्षगामिनः[2] ॥ ७
सिंह-व्याघ्र-गजैर्युक्तो गो-वृषा-श्वैर्नरैर्युतः[3] । रथमा[4]रुह्य यो याति पृथिव्यां स नृपो भवेत् ॥ ८
प्रासादं कुञ्जरवरानारुह्य सागरं विशेत् । तथैव च विकथेत[5] तस्य नीचो नृपो भवेत्(?) ॥ ९
पुष्करिण्यां तु यस्तीरे भुञ्जीत शालिभोजनम् । श्वेतं गजं समारूढः स राजा[6] न[7] चिरा[8]द् भवेत् ॥ १०
सुवर्ण-रूप्यभाण्डे वा यः पूर्वनवरा(?)स्नुयात् । प्रासादे वाऽथ भूमौ वा याने वा राज्यमाप्नुयात् ॥ ११
श्वेते पुरीषे मूत्रेऽथ यः स्वप्ने च विकुष्यति । राजा राज्यफलं वाऽपि सोऽचिरात् प्राप्नुयान्नरः ॥ १२
यत्र वा तत्र वा स्थित्वा जिह्वायां लिखते नखः । दीर्घया[9] रक्तया[10] स्थित्वा स नीचोऽपि नृपो भवेत् ॥ १३
भूमिं ससागरजलां सशैल-वन-काननाम् । बाहुभ्यामुद्धरेद्यस्तु स राज्यं प्राप्नुयान्नरः ॥ १४
आदित्यं वाऽथ चन्द्रं वा यः स्वप्ने स्पृशते नरः । श्मशानमध्ये निर्भीकः[11] परं हत्वा[12] चमूपतिम् ॥ १५
सौभाग्यमर्थं[13] लभते लिङ्गच्छेदात् स्त्रिया नरः । भगच्छेदे तथा नारी पुरुषात्[14] प्राप्नुयात् फलम् ॥ १६
शिरो वा छिद्यते यस्तु सोऽसिना छिद्यतेऽपि वा । सहस्रलाभं जानीयाद् भोगांश्च विपुलान् नृपः ॥ १७
धनुरारोहते यस्तु विस्फारण-समार्जने । अर्थलाभं विजानीयात् जयं युधि[15] रिपोर्वधम् ॥ १८
द्विगाढं(?))हस्तिनारूढः शुक्लो वा समलङ्कृतः । यः स्वप्ने जायते भीतः समृद्धिं लभते सतीम् ॥ १९

देवान् साधु-द्विजान् प्रेतान् स्वप्ने पश्यन्ति पुष्टिभिः[16] ।
रोहिता सुख[17]मिच्छन्ति[18] विपरीते विपर्ययः ॥ २०

गृहद्वारं विवर्ण[19]मभि[20]ज्याद्वा यो[21] गृह[22] नरः । व्यसनान्मु[23]च्यते शीघ्रं स्वप्नं दृष्ट्वा हि तादृशम् ॥ २१
प्रपानं[24] यः[25] पिबेत्पानं बद्धो वा योऽभिमुच्यते । विप्रस्य सोमपानाय शिष्याणामर्थवृद्धये ॥ २२
निम्नं[26] कूपजलं[27] छिद्रान् यो भीतः स्थल[28]मारुहेत् । स्वप्ने स वर्धते सस्य[29]-धन-धान्येन मेधसा ॥ २३
श्मशाने शुष्कदारुं वा वह्निं[30] शुष्कद्रुमं तथा । यूपं[31] वा योऽधिरूढः स्यात् स्वप्ने व्यसनमाप्नुयात् ॥ २४
त्रपु-सीसा-यसं रज्जुं नानकं[32] मक्षिकायुत[33]म् । यस्मिन् स्वप्ने[34] प्रयच्छन्ति तस्यासौ ध्रुवो भवेत् ॥ २५
अकालजं फलं पुष्पं काले वा यच्च गर्हित[35]म् । यस्मै स्वप्ने प्रदीयेते तदस्यायासलक्षणम् ॥ २६

अलक्तकं वाऽथ[36] रोगो(गं) वा निवातं यस्य वेश्मनि ।
गृहदाघ(ह)मवाप्नोति चौरैर्वा शस्त्रघातनम् ॥ २७
अगम्यागमनं[37] चैव सौभाग्यायाभिवृद्धये ।
अलं कृत्वा यया पीत्वा यस्य[38] वस्त्रयाश्च यद् भवेत् (?) ॥ २८

सुनि(शुनीं)[39] चतुष्पदं स्वप्ने यो भयं विश्य बुध्यते । पुनर्न भवति भार्या सुरूपा[40] सुपरिच्छदा ॥ २९
वीणां विषं[41] च[42] वल्लकीं स्वप्ने गृह्य विबुध्यते । कन्यां तु लभते भार्यां कुलरूपविभूषिताम् ॥ ३०

---

1 च्यवनं; D च्यसनं । 2 A पक्षगामनिः; D पित्तगामिनः । 3 A यथा; D युतां । 4 B तथामा° । 5 B विकथ्यैव; D विकाघृत । 6–7–8 A These are missing in this Ms. 9 B दीर्घ°; D दीर्घजा । 10 B जरे । 11 A क्षपि तिष्ठन् । 12 B तूचो; D कचा । 13 A सर्व; D महर्षं । 14 A B पुरुषः । 15 D बुधे । 16 A तुष्टिभिः । 17 D missing. 18 D मुच्छंति । 19 B D विवृणुम् । 20 D असिद्यात् । 21–22 B D योग्यं । 23 B D वासनाम् । 24 A प्रपातं; B प्रापनं । 25 A यत् । 26 A C D निम्नान् । 27 B D ०जलान् । 28 A चलम् । 29 A तुष्या; D तु स्यात् । 30 D बाल्यं । 31 B रूपं; D यूयं । 32 B नानाकं । 33 B D मधु । 34 D प्रश्ने । 35 B गर्व्वितम्; D गर्भितम् । 36 B वांध्य°; D वाध्य° । 37 A गमनम् । 38 D not found. 39 D शकुनिं । 40 A अनुरूपा । 41–42 A विपन्ती; D पिपंच ।

विषेण म्रियते यस्तु विषं वाऽपि पिबेन्नरः । *न भीतो धन-धान्येन वध्यते[1] न चिराद्धि सः ॥ ३१
उपाचरेदासवाज्ये मृतो गत्वा (?)अकिंचनः । ब्रूयाद् वा सद्वचः किञ्चिन्नसत्यं वृद्धये हितम् ॥ ३२
प्रेतयुद्धं[2] समारूढो दंष्ट्रियुक्तं च यो रथम् । दक्षिणाभिमुखो याति म्रियते सोऽचिरान्नरः ॥ ३३
वराहयुक्ता या नारी ग्रीवाबद्धं[3] प्रकर्षति[4] । सा तस्य पश्चिमा रात्री[5] नगे भवति पर्वते ॥ ३४
खर-शूकरयुक्तेन खरोष्ट्रेण वृकेण[6] वा । रथेन दक्षिणं याति दिशं[7] स म्रियते नरः ॥ ३५
कृष्णवासो यदि भूत्वा प्रवासं नावगच्छति । मार्गे स भयमाप्नोति नारी दक्षिणगा[8] वधम्[9] ॥ ३६
यूपं[10]मेकखरं शूलं[11] यः स्वप्नेष्वभिरोहति । सा तस्य पश्चिमा रात्री यदि साधु न पश्यति ॥ ३७
दुर्वासाः कृष्णभस्मश्च वामं[12]तैलविपक्षितम्[13](?) । सा तस्य पश्चिमा रात्री यदि साधु न पश्यति ॥ ३८
अभक्ष्यभक्षणं चैव पूजितानां च दर्शनम् । कालपुष्पफलं चैव लभ्यतेऽर्थस्य सिद्धये[14] ॥ ३९

नराग्रं[15]वेश्मनः सालो[16] यः स्वप्ने वदते[17] नरः ।
सोऽचिराद्[18] वमते[19] लक्ष्मीं क्लेशं चाप्नोति दारुणम् ॥ ४०

दर्शनं ग्रहणं भग्नं[20] शयना-सनमेव च । प्रशस्तमाममा(मां)सं च स्वप्ने वृद्धिकरं हितम् ॥ ४१
पक्वमांसस्य घासाय(सस्य)[21] भक्षणं ग्रहणं तथा[22] । स्वप्ने व्याधिभयं विन्द्याद् भद्रबाहुवचो यथा ॥ ४२
छर्दने मरणं विन्द्यादर्थ[23]नाशो विरेचने । छत्रो यानाद्यधान्यानां[24] ग्रहणं मार्गमादिशेत् ॥ ४३
मधुरे निवेशं[25]स्वप्ने दिवा च यस्य वेश्मनि । तस्यार्थनाशं नियतं मृतो वाऽप्यभिनिर्दिशेत् ॥ ४४
यः स्वप्ने गायते हसते नृत्यते पठते नरः । गायते(ने) रोदनं विन्द्यात् नृत्यते(नर्तने)[26]वध[27]-बन्धनम्[28] ॥ ४५
हसने शोचनं ब्रूयात् कलहं पठने तथा । बंधने स्थानमेव स्यात् मुक्तौ[29] देशान्तरं वदेत्[30] ॥ ४६
सरांसि सरितो वृद्धान् पर्वतान् कलशान् गृहम्[31] । शोकार्त्तः पश्यते स्वप्ने स च शोकोऽभिवर्धते ॥ ४७
आसनं शयनं यानं गृहं वस्त्रं च भूषणम् । स्वप्ने यस्याभिदीयन्ते सुखिनः श्रियमाप्नुयात् ॥ ४८
अलङ्कृतानां द्रव्याणां वाजि-वारणयोस्तथा । वृषभस्य च शुक्लस्य दर्शने प्राप्नुयाद् यशः ॥ ४९
पताकामसियष्टिं वा शक्तिं मुक्तान्[32] सकाञ्चनान् । दीपिकां लभते स्वप्ने योऽपि ते लभते धनम् ॥ ५०
मुत्रं[33] वा कुरुते स्वप्ने पुरीषं वा सलोहितम् । प्रतिबुध्येत थायश्च[34](?) लभते सोऽर्थनाशनम् ॥ ५१

अहिर्वा वृश्चिकः कीटो यं स्वप्ने दशते नरम् ।
प्राप्नुयात् सोऽर्थवान्[35] यः[36] स[37] यदि भीतो न शोचते ॥ ५२

पुरीषं छर्दितं यस्तु भक्षयेन्न च कुत्सते[38] । मूत्रं रेतश्च रक्तं च स शोकात् परिमुच्यते ॥ ५३
कालेयं चन्दनं रोध्रं घर्षणे[39] न प्रशस्यते । अत्र[40] लेपानि[41] पिष्टानि तान्येव धनवृद्धये ॥ ५४

---

* A This line and the next line are not found in this Ms. 1 D बध्यते । 2 B °युक्तं । 3 A °युद्धं । 4 B प्रवर्षति । 5 B रात्रौ । 6 A वृषेण । 7 A दिवसं । 8-9 A मागधम् । 10 A द्वय । 11 D मूलं । 12 B वाय°; D चाय° । 13 B विपक्षितान्; D विभाक्षितं । 14 A वृद्धये । 15 A वराग्रं । 16 B शीलः । 17 B चटते । 18 B चिरात् । 19 A वचते; D वेमते । 20 A भक्षः; B missing in this Ms. 21 A या सटया; D या । 22 A not found. 23 B अर्थं° । 24 A धातानां; D त्रानानां । 25 B निवेशा । 26-28 D मृत्युमेव निबंधनम् । 29 A युक्तौ । 30 B व्रजेत् । 31 B D ग्रहान् । 32 A शुक्लां; D उल्कां । 33 A पुत्रं । 34 B तपायान्; D थायश्च । 35 D अर्थशः । 36-37 B पश्यन्; D not found. 38 D कुच्छते । 39 A यः । 40-41 B अनलेपनानि; D अकुलेपनानि ।

रक्तानां करवीराणामुत्पलानामुपानयेत्(?) । लम्भो(भे)वा दर्शने[1] स्वप्ने प्रयाणावा(यं) विधीयते ॥ ५५

[3]कृष्णं वासो[4](?)हयं[5] कृष्णं योऽभिरूढः प्रयाति च । दक्षिणां दिशमुद्विग्नः सो[6]ऽपि[7] प्रेतार्थं तत्त्वतः[9] ॥ ५६

आसनं शाल्मलीं वापि कदलीं पारिभद्रकम् । पुष्पितं यः समारूढः सवित्तमधि[10]रोहति ॥ ५७

रुद्राक्षी विकृता काली नारी स्वप्ने च कर्षति । उत्तरं[11] दक्षिणां दिशं मृत्युः शीघ्रं समीहते ॥ ५८

जटीं मुण्डीं विरूपाक्षीं[12] मलिनां मलिनवाससाम् । *स्वप्ने यः पश्यति ग्लानिं समूहे भयमादिशेत् ॥ ५९

†द्वादशं[13](दक्षिणं) पुण्डरीकं[14] वा सव्यं कमलमेव[15] च ।
दृष्ट्वा स्वप्ने विबुध्येत ग्लानिं तस्य समादिशेत् ॥ ६०

स्थले वाऽपि विकीर्येत जले वा ना[16]शंसा[17]प्नुयात् । यस्य स्वप्ने नरस्यास्य तस्य विन्द्यान्महद्भयम् ॥ ६१

वल्ली-गुल्ममयो वृक्षो वल्मीके यस्य जायते । शरीरे तस्य विज्ञेयं तदा[18] ग[19]सूं(तदङ्गस्य)विरेचनम् ॥ ६२

मालो[20] वा वेणुगुल्मो वा खर्जूरो हरितो[21] द्रुमः । मस्तके जायते स्वप्ने तस्य साप्ताहिकः स्मृतः ॥ ६३

हृदये यस्य जायन्ते हृद्रोगेण विनश्यति । अनङ्ग(यदङ्गे) जायमानेषु तदङ्गस्य विनिर्दिशेत् ॥ ६४

रक्तमाला तथा माला रक्तं वा सूत्रमेव च । यस्मिन्नेवावबध्येत तदङ्गे न विकृश्यति ॥ ६५

ग्राहो[22] नरो(रं) नगं कश्चित् यदा स्वप्ने च कर्षति । बद्धस्य मोक्षमाचष्टे मुक्तिं बद्धस्य निर्दिशेत् ॥ ६६

पीतं पुष्पं फलं यस्मै रक्तं वा संप्रदीयते । कृताकृतं[23]सुवर्णं वा तस्य सौभर्थ्य(?)वर्णभाक् ॥ ६७

श्वेतमांसासनं यानं सितमाल्यस्य धारणम् । श्वेतानां वाऽपि द्रव्याणां स्वप्ने दर्शनमुत्तमम् ॥ ६८

बलीवर्दयुतं यानं योऽभिरूढः प्रधावति । प्राचीं दिशमुदीचीं वा सोऽर्थलाभमवाप्नुयात् ॥ ६९

नग-वेश्म-पुराणां तु दीप्तानां तु शिरस्थितः । यः स्वप्ने मानवः सोऽपि महीं भोक्तुं विरामये[25]त् ॥ ७०

मृन्मयं(यां) नाग(व)मारूढः सागरे प्लवते हि[26] [27]तः (सः) ।
तथैव च विबुध्येत सोऽचिराद् वसुधाधिपः ॥ ७१

पाण्डुराणि च वेश्मानि पुष्प-शाखा-फलान्वितात् । यो वृक्षात् पतति स्वप्ने स फलं चेष्टते तदा ॥ ७२

वासोभिर्हरितैः शुक्लैर्वेष्टितः प्रतिबुध्यते । दह्यते योऽग्निना वाऽपि बध्यमानो[28] विमुच्यते ॥ ७३

दग्धतैल-घृतानां वा क्षीरस्य[29] च विशेषतः । प्रशस्तं दर्शनं स्वप्ने भोजनं न[30] प्रशस्यते ॥ ७४

अङ्ग-प्रत्यङ्गयुक्तस्य शरीरस्य विवर्धनम् । प्रशस्तं[31] दर्शनं स्वप्ने नख-रोमविवर्धनम्[32] ॥ ७५

उत्सङ्गः पूर्यते[33] स्वप्ने यस्य धान्यैर्[34]निन्दितैः । फल-पुष्पैश्च संप्राप्तः प्राप्नोति महतीं श्रियम् ॥ ७६

कन्या वा[35]ऽऽर्या[36]दि[37] वा कन्या रूपमेव(?) विभूषिता ।
प्रकृष्टां[38] प(ह)श्यते स्वप्ने लभते योषितः श्रियम् ॥ ७७

प्रक्षिप्यति यः शस्त्रैः[39] पृथिवीं पर्वतान् प्रति । शुभमारोहते यस्य सोऽभिषेकम[40]वाप्नुयात् ॥ ७८

---

1 B दशने; D दशमे । 2 A प्रणया वा; D प्रायाणा वा । 3–5 A not found in this Ms. 6–9 B सोऽभिप्रेतो यतस्ततः; D सोऽभिप्रेणे यतस्ततः । 10 B D सवित्तम् । 11 B D उदयं । 12 A D विरूपा वा । * A this is not found in this Ms. † A स्वप्ने वरत्तापसं पण्डुरागं वा सव्यकपिलमेव च । 13 D वायसं । 14 D पुण्डरागं । 15 D कपिलम् । 16–17 A समवाप्नयात् । 18–19 B तदागं च; D तदागस्य । 20 B नीलः; D ताणः । 21 A रोहति । 22 B D ग्रहः । 23 A D कृताकृति° । 24 B D सोभस्य । 25 B निरामय; D निरमय । 26–27 D हतः । 28 A लक्ष्मान; B लक्ष्यमानः । 29 A परस्य । 30 A च । 31 A not found. 32 A °विवर्जनम् । 33 B पूज्यते । 34 A not found; B धर्म्यैः । 35–37 A B वा यदि । 38 A प्रकृष्णा । 39 D शास्त्रैः । 40 B वृषेकम् ।

